आशु गच्छति श्वा ॥ सिञ्चति उक्षा ॥ पुष्णाति वृष्ट्या पूषा ॥ प्लीहा रोगः ॥ क्लेदा चन्द्रः ॥ स्नेहा व्याधिः ॥ मुह्यत्यनेनाहतेन मूर्धा ॥ मज्जति देहे मज्जा ॥ आर्यैः गणकश्रेष्ठैः मीयते अर्यमा ॥ विश्वप्सा कालः ॥ परिज्वा सूर्यः ॥ वेदे गगनस्य मातृत्वप्रसिद्धेः तत्र श्वयति मातरिश्वा ॥ मघं धनं स्वीकरोति मघवा ॥ इतिकरणात् भोजोक्तं ग्रावन् महन् अथर्वन् इति सिद्धम् । महा महत्वम् ॥ अथर्वा ऋषिः ॥

इति प्रक्रियासर्वस्वे उणादिखण्डे प्रथमः पादः ॥



## अथ द्वितीयः पादः ॥

॥ १५१ ॥ कृहृभ्यामेणुः ॥ २—१ ॥

करोति युद्धादिकं **करेणुः** गजः ॥ हरति चित्तं **हरेणुः** गन्धद्रव्यम् ॥

॥ १५२ ॥ हनिकुषिनीरमिकाशिभ्यः क्थन् ॥ २—२ ॥

कित्त्वात् "अनुदात्तोपदेश" इति नलोपः । हन्यते **हथः** विषण्णः ॥ "तितुत्र" इत्यनिट्त्वम् । ष्टुः । कुष्णाति देहं **कुष्ठः** ॥ **सुनीथः** नीतिमान् ॥ रमन्ते अत्र **रथः** ॥ "छशां षः" । दीप्यतेऽग्नौ क्षिप्तं[1] **काष्ठम्** ॥

॥ १५३ ॥ अवे भृञः ॥ २—३ ॥

अवभ्रियन्ते संभाराः अत्र **अवभृथः** ॥

॥ १५४ ॥ उषिकुषिगार्तिकनिभ्यस्थन् ॥ २—४ ॥

गुणः । तप्यते श्वासैः **ओष्ठः** ॥ **कोष्ठः** कुक्षिः ॥ गीयते **गाथा** ॥ प्राप्यते **अर्थः** ॥ **कन्था** ॥

॥ १५५ ॥ सर्तेर्णित् ॥ २—५ ॥

सरति **सार्थः**[4] ॥

॥ १५६ ॥ जॄवृञ्भ्यामूथन् ॥ २—६ ॥

**जरूथः** मांसम् ॥ वृणोत्यनेन **वरूथः** रथगुप्तिः सेनासङ्घातश्च ॥

॥ १५७ ॥ पातॄतुदिवचिरिचिसिचिभ्यस्थक् ॥ २—७ ॥

---

१. G omits क्षिप्तं.

२ A and G omit -कनि-

३. P. णित्.

४. A and GD सार्थम्.

कित्त्वात् "घुमास्था" इतीत्वम् । पीथः पानम् ॥ "ऋत इत्" दीर्घः । तरत्यनेन नदीं पापं वा तीर्थम् ॥ तुत्थम् अञ्जनभेदः ॥ [1]यजादित्वात् उक्थम् साम ॥ क्षीयते रिक्थम् द्रव्यम् ॥ सिच्यते गव्यैः सिक्थं ओदनांशः ॥

---

॥ १५८ ॥ अर्तेर्निरि ॥ २—८ ॥

निरृथः निकायः गोसङ्घश्च ॥

---

॥ १५९ ॥ निशीथगोपीथावगाथाः ॥ २—९ ॥

शेरतेऽत्र निशीथः ॥ गोपीथः रक्षा ॥ अवगाथः प्रातस्सवनम् । अवगथ इत्येके । स च मार्गार्थिः ॥

---

॥ १६० ॥ गश्चोदि ॥ २—१० ॥

[2]क्थः । कित्त्वादीत्वम् । उद्गीथं[3] सामभेदः ॥

---

॥ १६१ ॥ समीणः ॥ २—११ ॥

समिथः सङ्गमः ॥

---

॥ १६२ ॥ तिथकुथपृष्ठगूथयूथप्रोथाः ॥ २—१२ ॥

तिथः दिवसः ॥ [ कुथः ॥ पृष्ठम्[4] ] ॥ गूथं पुरीषम् ॥ यौति यूथम् ॥ प्रोथः मुखाग्रम् ॥

---

॥ १६३ ॥ स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दि[5]दहिदसिदम्भिवासिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥ २—१३ ॥

---

1. G omits यजादित्वात्········ ओदनांशः.
2. G गश्चादिक्थकः.
3. G and P -थः.
4. The words within brackets are omitted in all mss.
5. A omits -दहि-

"नेड्वशि" "लोपो व्योः"। स्फारम् ॥ तञ्चिवञ्च्योः कित्त्वात् नलोपः। न्यङ्क्वादि कुः। तक्रम् ॥ वक्रम् ॥ शक्नोति शक्रः ॥ क्षिप्रं क्षोत्तुं शक्योऽर्हो वा क्षुद्रः ॥ सूप्रा नदी ॥ तृप्रं तृप्तिः ॥ द्रमः सूर्यः ॥ यत्र नलोपाभावः तत्रेदित्त्वं ज्ञेयम्। वन्द्रः पूजकः ॥ उन्देरनिदित्वान्नलोपः। उद्रः यादोभेदः। समुन्दन् भूमिं समुद्रः ॥ श्वित्रं रोगः ॥ वृत्रः ॥ अजेर्वीभावः। सर्वत्र गच्छति वीरः ॥ देशान्तरं नीयते नीरम् ॥ पद्रं ग्रामः ॥ मद्रः क्षत्रियः ॥ मोदतेऽनया दृष्टया सुहृत् मुद्रा ॥ खिद्रः सूर्यः ॥ छिद्यते छिद्रम् ॥ भिद्यते[1] भिद्रं वज्रम् ॥ मोदन्तेऽनेन श्रोतारो मन्द्रः ॥ चन्द्रः ॥ दह्रः अग्निः ॥ दस्यतो हतो रोगान् दस्रौ ॥ दभ्रः[2] अल्पः ॥ वसेः प्रसारणम्। उस्राः रश्मयः ॥ वाशते वाश्रा धेनुः ॥ शीरः अजगरः ॥ हस्रः हर्षुलः ॥ सिध्रः साधुः ॥ शुभ्रः ॥ घसेश्च भोजः। घस्रः दिवसः ॥

---

॥ १६४ ॥ निन्देर्नलोपश्च ॥ २—१४ ॥

निन्द्यते निद्रा ॥

---

॥ १६५ ॥ तमेर्दुक् च ॥ २—१५ ॥

ताम्यत्यनया तन्द्रा ॥

---

॥ १६६ ॥ चकिरम्योरुच्चोपधायाः ॥ २—१६ ॥

प्रतिहन्यतेऽनेन रसान्तरं चुक्रः अम्लः[3] ॥ रुम्रं रम्यम्। "चम्योः" इति पाठे[4] चुम्रः नाशः ॥

---

॥ १६७ ॥ वौ कसेः ॥ २—१७ ॥

उच्चोपधायाः। विकुस्रः चन्द्रः ॥

---

1. A, G and GD omit भिद्यते.
2. A and GD दस्रः.
3. G चुक्रोमः.
4. G omits पाठे.

## ॥ १६८ ॥ अमितम्योः दीर्घश्च ॥ २—१८ ॥

गम्यते फलार्थं आम्रम्[1] ॥ काङ्क्ष्यते ताम्रम् ॥

---

## ॥ १६९ ॥ दुरीणो लोपश्च ॥ २—१९ ॥

दुष्पूर्वस्येणो रक् । धातोर्लोपश्च । दुर् र । "रो रि" इति लोपे "ढ्रलोपे" इति दीर्घः । दुःखेन गम्यं दूरम् ॥

---

## ॥ १७० ॥ कृतेः छः क्रू च ॥ २—२० ॥

[2]कृते रक् स्यात्, अन्त्यस्य छत्वं क्रू इति सर्वादेशश्च । कृन्तति[3] जनान् कृच्छ्रम् । छिनत्ति क्रूरः ॥

---

## ॥ १७१ ॥ रोदेर्णिलुक् च ॥ २—२१ ॥

णिलुकि गुणाभावः । रोदयत्यरीन् रुद्रः ॥ "अरोदीत्" इति रुद्रः इति श्रुत्यानुगुण्यात् अण्यन्तादेवाह भोजः ॥

---

## ॥ १७२ ॥ बहुलमन्यत्रापि संज्ञाछन्दसोः ॥ २—२२ ॥

अन्यप्रत्ययेष्वपि संज्ञाछन्दसोः बहुलं णिलुक् स्यात् । वान्ति [4]पर्णशुषो वाताः । पर्णानि शोषयन्तीति क्विप्[5] । सर्वत्रापि धातोः[6] अन्तर्भावितण्यर्थत्वेन [7]विधिः ज्ञेयः । छन्दसि "वर्धन्तु त्वा" इत्यादि ॥

---

## ॥ १७३ ॥ जोरी च ॥ २—२३ ॥

जीरः अग्निः ॥

---

१. GD आम्रः.
२. G कृतेरन्त्यस्य.
३. GD adds पीडयति.
४. GD and A वर्ण.
५. GD and P add वायुभेद॰ स्याख्या.
६. G omits धातोः.
७. A and GD न विधिः

## ॥ १७४ ॥ सुसूधागृधिभ्यः क्रन् ॥ २—२४ ॥

अभिषूयते सुरा ॥ सुवति प्रेरयति कर्मणि[१] जनान् सुरः[२] ॥ कित्त्वादीत्वम् । दधाति प्रज्ञया सर्वं धीरः ॥ काङ्क्षति[३] मांसं गृध्रः ॥

---

## ॥ १७५ ॥ शुसिचिमीञां[४] दीर्घश्च ॥ २—२५ ॥

शुः गत्यर्थः । असंभ्रमं गच्छति[५] शूरः ॥ वृक्षायोभिः बध्यते सीरम् ॥ चीयते विस्तीर्यते आर्ज्यते वा चीरम् ॥ मीरः समुद्रः ॥

---

## ॥ १७६ ॥ वाविन्धेः ॥ २—२६ ॥

क्रन[६]: कित्त्वान्नलोपः । विध्रम् निर्मलम् ॥

---

## ॥ १७७ ॥ वृधिवपिभ्यां रन् ॥ २—२७ ॥

गुणः । वृधेः बन्धवृत्तित्वात्[७] वर्ध्रं[८] चर्मरज्जुः ॥ उप्यते[९]ऽस्मिन् बीजं वप्रः केदारः । उप्यन्ते निधीयन्ते शिला अत्रेति सालश्च[१०] ॥ रुधीण्भ्यां च भोजः । रलयोरैक्यात् रुणद्धि औष्ण्यं लोध्रः वृक्षः ॥ एरा तृणभेदः ॥

---

## ॥ १७८ ॥ ऋज्रेन्द्राग्रवज्रविप्रकुप्रचुप्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्[११]त्रेरामालाः ॥ २—२८ ॥

ऋज्रः नायकः ॥ इन्देः इन्द्र[१२]: ॥ अङ्गति पुरो गच्छति अग्रम् ॥ अचञ्चलं वजति अप्रतिहतं गच्छति वज्रम् ॥ उप्यतेऽस्मिन् पुण्यं विप्रः ॥

---

१. G omits कर्मणि.
२. A, GD and P सूरः.
३. G and GD काङ्क्षते.
४. G -मीनां.
५. GD and P गच्छम्.
६. G रकः.
७. A and GD बन्ध-
८. GD वर्ध्रः.
९. G उच्यते.
१०. G शालश्च.
११. G -वत्रे-
१२. G इन्द्रियः.

कुभ्रं वनम् ॥ चुभ्रं वक्त्रम् ॥ क्षौति वपने क्ष्दिति स्वनति छिनत्ति वा क्षुरः ॥ छिनत्ति भुवं खुरः ॥ भन्देः भद्रम् ॥ उच्यति समवैत्यत्र तमोगुणैः उग्रः ॥ भेरः भीरुः ॥ बिभेत्यस्मिन् भेलः जलतरणम् । बिभेत्यस्मात् भेरी दुन्दुभिः । भेरभेलावपि दुन्दुभ्यर्थावित्यन्ये[2] ॥ शोचति देवगुणैः शुक्रः ॥ शोचनीयत्ववैपरीत्यात् शुक्लः ॥ "गुरी उद्यमने" उद्यच्छति उन्नमति वर्णान्तरात् गौरः ॥ एति इरा जलम् ॥ अन्ध्ररन्ध्रसिलिन्ध्रोड्रपुण्ड्रतीरनीव्रशीघ्रसान्द्रगुन्द्रोन्द्रादयो भोजोक्ताः ॥ ओड्रः तरुः ॥ नीव्रं गृहछदिरुपान्तः ॥ गुन्द्रा जलतृणम् ॥ आद्युक्तेः श्वभ्रम्[3] ॥

## ॥ १७९ ॥ समिकस उकन् ॥ २—२९ ॥

कसति गच्छति संकसुकः स्थिरः । बाहुलकात् सङ्कुसुक इत्यन्ये । भोजस्त्वाह—"कमितम्योः दुक् च" कमनीयत्वात् कन्दुकः ॥ तिन्दुकः तरुः ॥ "अशिकचोः नुं च" अश्नुतेऽङ्गं अंशुकम् ॥ बध्यतेऽङ्गे कञ्चुकः ॥ "कुहेः[4] कित्" कुहकम् आश्चर्यम् ॥ "कमेः क्रम[5] च वा" क्रमुकं[6] बन्धनम् ॥ "चुलुकोन्मुकचिबुकचूचुकजम्बुकगवेधुकामधुकभावुकादयः" गवेधुका तृणजातिः ॥ मधुकः यष्टिमधु ॥ भावुकः भगिनीपतिः ॥ आद्युक्तेः मड्डुकवालुकादीति[7] ॥

## ॥ १८० ॥ पचिनशोः[8] णुकन्कनुमौ च ॥ २—३० ॥

आभ्यां णुकन् । पचेरन्त्यस्य कः । नशेः नुं च । वृद्धिः[10] । पाकुकः[11] सूपकारः ॥ नंशुकः चन्द्रः ॥

---

१. GD adds इति.
२. G दुन्दुभ्यावि-
३. G शुभ्रम्.
४. G कुहोः.
५. P क्रुम-
६. P क्रुमु-
७. P -भालु-
८. P भालुकः.
९. GD नश्योः.
१०. G omits वृद्धिः.
११. G पाचकः.

॥ १८१ ॥ भियः क्रुकन् ॥ २—३१ ॥

भीरुकः ॥

॥ १८२ ॥ क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥ २—३२ ॥

अनुपपदस्य सोपपदस्यापि धातोः शिल्पिनि नाम्नि च क्वुन्[1] स्यात् । वोरकः[2] शिल्पी ॥ लिखकः कायस्थः ॥ तक्षकः ॥ नाम्नि तु ध्वनति मशकः । भक्ष्यतेऽनेन चषकः ॥ सोपपदादपि ऊह्यम् ॥

॥ १८३ ॥ जहातेर्द्वे च ॥ २—३३ ॥

कित्त्वादाल्लोपः । जहकः त्यागी ॥

॥ १८४ ॥ ध्मो धम च ॥ २—३४ ॥

धमकः कर्मारः ॥

॥ १८५ ॥ हनो वध च ॥ २—३५ ॥

वधकः व्याधः ॥

॥ १८६ ॥ बहुलमन्यत्रापि ॥ २—३६ ॥

रुचितिलिपुलिपिटिक्षिपिध्रुधूभ्य आह भोजः । दीप्यते रुचकः अङ्गुलीयकम् ॥ स्निह्यते आर्द्रीकृत्य योज्यते तिलकः ॥ महत्तयोन्नमति पुलकः ॥ संहन्यते पिटकः ॥ क्षिपकः[3] आयुधम् ॥ उवङ् । टापि क्षिपकादित्वादित्वाभावः[4] । ध्रुवका[5] पात्रभेदः ॥ धुवका सैव ॥

॥ १८७ ॥ कृषेर्वृद्धिश्चोदीचाम् ॥ २—३७ ॥

कार्षकः कृषकश्च कृषिजीवी ॥

---

१. A मवुः.
G क्षुः.
२. G वारेकः.
३. A क्षिपः.
४. G क्षिपकादित्वाभावः.
५. G ध्रुरकः.

॥ १८८ ॥ **उदकम्** ॥ २—३८ ॥

उनत्ति[1] **उदकम्** । कीचकैरकैलकाश्मकादयो भोजोक्ताः । एरका तृणम् ॥ एलकः मेषः ॥ अश्मकाः जनपदः ॥

---

॥ १८९ ॥ **वृश्चिकृषिकुशिभ्यः किकन्** ॥ २—३९ ॥

छिनत्ति पुच्छेन **वृश्चिकः** ॥ **कृषिकः**[2] कृषीवलः ॥ हितं भाषते **कुशिकः** ॥

---

॥ १९० ॥ **प्राङि पणिकषः** ॥ २—४० ॥

**प्रापणिकः** आगन्तुः वणिक् च ॥ **प्राकषिकः** नर्तकः ॥

---

॥ १९१ ॥ **मुषेर्दीर्घश्च** ॥ २—४१ ॥

मुष्णाति अपनयति धान्यादि **मूषिकः** ॥

---

॥ १९२ ॥ **स्यमेः संप्रसारणं**[3] **च** ॥ २—४२ ॥

"हल" इति दीर्घः । **सीमिका** उपजिह्वा वल्मीकशिखा च ॥

---

॥ १९३ ॥ **क्रिय इकन्** ॥ २—४३ ॥

**क्रयिकः** ॥

---

॥ १९४ ॥ **आङि पणिपनिपतिखनिभ्यः** ॥ २—४४ ॥

**आपणिकः** वणिक् ॥ स्तूयत इति **आपनिकः** इन्द्रनीलः ॥ **आपतिकः** मयूरः ॥ **आखनिकः** आखुः ॥

---

१. A omits this sentence.
२. G omits this word.
३. GD and P प्रसारणं.

ये तद्धितादिभिः सिद्धाः क्रयिकापणिकादयः ।
ते व्युत्पत्तेर्बाहुविध्यं वक्तुमुक्ता महर्षिणा ॥

अलिकलिदलिपुलि[1]स्फटिपाभ्यश्च भोजः । अल्यते भूष्यते अलिकम् ॥ बद्धदलत्वात् कलिका ॥ दलिका कन्दारु ॥ पुलिकः मणिः ॥ "स्फट भेदने" आशु भिद्यते स्फटिकः ॥ कित्त्वादाल्लोपः । पिबति मधूनि पिकः ॥ "पिपीलिकेतिकहृदिकमक्षिकादयः" इति च[2] । पीडयति पिपीलिका ॥ इतिकः मुनिः ॥ हृदिकः यादवः ॥ सङ्घातीभवति मक्षिका ॥ आद्युक्तेः क्षुरिछुर्योः छेदनार्थयोः । क्षुरिका ॥ छुरिका ॥

---

## ॥ १९५ ॥ श्यास्त्याहृञविभ्य इनच् ॥ २—४५ ॥

आद्गुणः । गच्छति **श्येनः** ॥ संहन्यते धनमत्र **स्त्येनः** । "स्तेन चौर्ये" इत्यस्य पचाद्यचि स्तेन इति यकारं विनापि ॥ ह्रियते गीतेन **हरिणः** ॥ **अविनः** अध्वर्युः ॥

---

## ॥ १९६ ॥ वृजेः किच्च ॥ २—४६ ॥

वर्ज्यते **वृजिनं** पापम् ॥

---

## ॥ १९७ ॥ अजेरज च ॥ २—४७ ॥

वीत्वाभावार्थमजादेशोक्तिः । गतं देहात् **अजिनम्** ॥

---

## ॥ १९८ ॥ बहुलमन्यत्रापि ॥ २—४८ ॥

पीडयति इति[3] कठिनम्[4] ॥ दह्यते शत्रुभिः कुण्डिनम् ॥

---

१. GD स्थलि.
२. G and A omit च.
३. G and P omit इति.
४. G adds वनम्.

॥ १९९ ॥ द्रुदक्षिभ्यामिनन् ॥ २—४९ ॥

द्रवति नश्यति द्रविणम् ॥ दक्षते वर्धते[1] फलमनया दक्षिणा ॥

---

॥ २०० ॥ द्रुहेः कित् ॥ २—५० ॥

न द्रुह्यति द्रुहिणः ॥

---

॥ २०१ ॥ अर्तेरिच्च[2] ॥ २—५१ ॥

रपरः । इरादेशः । न गम्यते इरिणं ऊषरम् ॥

---

॥ २०२ ॥ वेपितुह्योः ह्रस्वश्च ॥ २—५२ ॥

[3]वेपतेऽत्र भयात् विपिनम् ॥ अर्दयति तुहिनम् ॥

---

॥ २०३ ॥ महेरिनण्[4] च ॥ २—५३ ॥

अस्मात् इनण्णपि[5] स्यात् । माहिनं शरशयनम् ॥ महिनः माहात्म्यवान् ॥

---

॥ २०४ ॥ क्विब्वचिप्रच्छिश्रिद्रुस्रुकटप्रुज्वां[6] दीर्घोऽसंप्रसारणं[7] च ॥ २—५४ ॥

एभ्यः क्विप् दीर्घश्च । वचिप्रच्छ्योः प्राप्तं[8] प्रसारणं[9] न स्यात् । वाच्[10] । पदत्वे कुत्वम् । उच्यते वाक् शब्दः ॥ प्रांछ् । पदत्वे "छशां षः" जश्त्व-

---

१. G omits वर्धते.

२. G अर्तेः किदिच्च.
GD अर्तेः किदिश्च.

३. GD and P add वेपेः ह्रस्वोक्तिः.

४. P इनल्.

५. G इनजि नञ्चापि.
P इनञ् । इनञ्चपि.

६. G -स्रुद्रुप्रुज्वां.
A -प्रुजूवां.

७. GD and P अप्रसारणं.

८. G omits प्राप्तं.

९. G and GD add च.

१०. G प्राच्.

चर्त्वे । शैब्दप्राट् ॥ सेव्यते श्रीः ॥ द्रूः धारौ[2] ॥ स्रूः नदीभेदः ॥ कटप्रूः कामः ॥ जूः पिशाचः ॥

---

## ॥ २०५ ॥ परौ व्रजेः षश्च पदान्ते ॥ २—५५ ॥

परिव्रजेः क्विप् दीर्घश्च स्यात् । पदान्ते षत्वं च । षस्य जश्त्वचर्त्वे । **परिव्राट्** । अपदान्ते तु षो न । परिव्राजौ ॥

---

## ॥ २०६ ॥ हुवः श्लुवच्च ॥ २—५६ ॥

श्लुवत् क्विब् दीर्घश्च स्यात् । श्लुवत्त्वात् इत्वम् । जुहूः ॥

---

## ॥ २०७ ॥ द्युतिदृणात्योः ह्रस्वश्च ॥ २—५७ ॥

श्लुवत् क्विप् । दृधातोः ह्रस्वश्च । दिद्युत् । "द्युतिस्वप्योः" इत्यभ्यासस्य प्रसारणम् । **दिद्युत्** सूर्यः ॥ उरदत्वम् । **ददृत्** हिंस्रः ॥

---

## ॥ २०८ ॥ स्रुवः कन् ॥ २—५८ ॥

कित्त्वादगुणः । उवङ् । **स्रुवः** ॥

---

## ॥ २०९ ॥ चिक् च ॥ २—५९ ॥

स्रुधातोः चिक्प्रत्ययः स्यात् । इकावितौ । **स्रुक्** ॥

---

## ॥ २१० ॥ तनोतेरनश्च वः ॥ २—६० ॥

अन् इत्यस्य[3] वः स्यात्, चिक् च । विस्तीर्यते **त्वक्** ॥

---

## ॥ २११ ॥ ग्लानुदिभ्यां डौ ॥ २—६१ ॥

---

1. G शब्दः प्राग्.
2. G and GD add स्वर्णम्.
3. A and G add नस्य.

ग्लायति कृष्णपक्षे ग्लौः ॥ नुद्यते नौः ॥

एजन्तत्वात् "कृन्मेजन्तः" इत्यव्ययत्वे प्राप्ते—

॥ २१२ ॥ च्विरव्ययम् ॥ २—६२ ॥

ग्लावादयः च्व्यन्ता एवाव्ययसंज्ञाः नान्यदा। तेन सुब्लुङ् न। च्व्यन्तत्वे तु नौकरोति तरून् इत्यव्ययत्वं स्यात् ॥

॥ २१३ ॥ रातेर्डैः[1] ॥ २—६३ ॥

दीयते राः ॥

॥ २१४ ॥ गमेर्डोः[2] ॥ २—६४ ॥

गच्छति गौः ॥ "द्युगमिभ्यां डोः" इति भोजः। अभिगम्यते द्यौः ॥

॥ २१५ ॥ भ्रमेर्डूः ॥ २—६५ ॥

भ्रमति [3]चलति भ्रूः ॥

॥ २१६ ॥ दमेर्डोसिः[4] ॥ २—६६ ॥

सित्वं खलु [5]पदत्वार्थं तस्य धातुष्वसंभवात्।
वैफल्यात् सस्य नेत्संज्ञा दाम्यत्यरिरनेन दोः ॥

॥ २१७ ॥ पणेरिज्यादे[6]श्च वः ॥ २—६७ ॥

इजिप्रत्ययः, आदेः वत्वं च। वणिक् ॥

---

१. GD omits visarga.
२. GD डौ.
३. G omits this word.
४. A and P डोस्.
५. A, G and GD पदार्थत्वं.
६. A -षेशश्च.

॥ २१८ ॥ वशेः[1] कित् ॥ २—६८ ॥

कित्त्वात् [2]संप्रसारणम् । उशिक् अग्निः कमनीयश्च ॥

---

॥ २१९ ॥ भृञ उच्च[3] ॥ २—६९ ॥

भुरिक् छन्दोभेदः ॥

---

॥ २२० ॥ जसिसहोरुरिन् ॥ २—७० ॥

**जसुरिः** अग्निः ॥ **सहुरिः** अनड्वान् । अङ्गेश्च भोजः । **अङ्गुरिः** अङ्गुलिरेव ॥

---

॥ २२१ ॥ सुयुरुवृञो युच् ॥ २—७१ ॥

**सवनः** कालभेदः ॥ जतिभेदाभावात् मिश्रीभवति **यवनः** म्लेच्छः ॥ **रवणः** भ्रमरः ॥ **वरणः** वृक्षभेदः ॥

---

॥ २२२ ॥ अशो रश च ॥ २—७२ ॥

अशेर्युच् रशादेशश्च । अश्नुते जघनं **रशना** ॥

---

॥ २२३ ॥ उन्देर्नलोपश्च ॥ २—७३ ॥

लघूपधगुणः । उद्यते घृताद्यैः **ओदनः** ॥

---

॥ २२४ ॥ बहुलमन्यत्रापि ॥ २—७४ ॥

चन्दनः । श्रुज्यसि[4]रसिरुचिरुहिभ्य आह भोजः । श्रवणः[5] नक्षत्रम् । जयनं ऊर्णापटः ॥ असनः वृक्षः ॥ रसना ॥ रोचना गोशीर्षम् ॥ रोहणः विद्रूरादिः ॥

---

१. G वशोः.
२. A, GD and P प्रसा-
३. GD उश्च.
४. GD omits-रसि-
५. GD श्रवणं.

## ॥ २२५ ॥ रञ्जेः क्युन्[1] ॥ २—७५ ॥

किच्त्वात् नलोपः । **रजनः** **रङ्गः** । महारजनं कुसुम्भम् । गौरादित्वात् रजनी ॥

---

## ॥ २२६ ॥ भूसूधूभ्रस्जिभ्यश्छन्दसि ॥ २—७६ ॥

बाहुलकाल्लोकेऽपि । **भुवनम्** ॥ **सुवनं**[2] चन्द्रतेजः ॥ **धुवनं** धूपः । निधुवनं रतिः ॥ भ्रस्जेः ग्रहिज्यादिना[3] प्रसारणम् । सस्य जश्त्वचुत्वे । **भृज्जनं** आर्ष्टूः[4] ॥

---

## ॥ २२७ ॥ कृपृवृजिमन्दिनिधाञ्भ्यः[5] क्युः ॥ २—७७ ॥

"ॠत इत्" कीर्यते दिक्षु **किरणः** ॥ "उदोष्ठ्यपूर्वस्य" । **पूरणः** समुद्रः ॥ **वृजनः** विवेक्ता । "व्रजि" इति क्वचित् पाठः । व्रजनम्[6] अन्तरिक्षम् ॥ बाहुलकान्नलोपः । **मदनः** ॥ निधाञो[7] नाशार्थत्वात् **निधनम्** ॥ केवलादपि । धार्यते पोष्यते वा धनम् ॥

---

## ॥ २२८ ॥ धृषेर्धिष[8] च संज्ञायाम् ॥ २—७८ ॥

प्रगल्भतेऽनया **धिषणा** बुद्धिः ॥

---

## ॥ २२९ ॥ हन्तेः घुरच् ॥ २—७९ ॥

**घुरणः** शंभुः ॥

---

१. G and GD क्युः.
२. G पुवनं.
३. G ग्रहीत्यादिना.
४. G and GD -ष्ट्रूम्.
५. G -धाञः.
६. G व्रजनो विवलः. P विवलः.
७. G विधाञो.
८. G धिषू.

## ॥ २३० ॥ गमेर्गग च ॥ २—८० ॥

गच्छन्त्यत्र खगाद्याः **गगनम्** ॥

---

## ॥ २३१ ॥ वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥ २—८१ ॥

अत्यन्ता एते वर्तमानेर्थे स्युः, शतृवच्च नुंङीबादि स्यात्। सिञ्चति **पृषत्** जलबिन्दुः ॥ **बृहत्** ॥ **महान्** ॥ गच्छति **जगत्** ॥ ङीपि पृषती बृहती इत्यादि। "जगत्सरसां शतृवच्च" इति कैचित्[1] पाठः। तेन वक्ष्यमाणासुन्नन्तस्यापि सरश्शब्दस्य शतृवत्त्वात् ङीप्। सरसी ॥

---

## ॥ २३२ ॥ संश्चत्तृपद्वेहत् ॥ २—८२ ॥

**संश्चत्** कुहकः ॥ तृप्यन्त्यनेन **तृपत्** चन्द्रः ॥ विजहाति गर्भं **वेहत्** गर्भघातिनी। अत्र वियदादयश्च दण्डनाथोक्ताः ॥

---

## ॥ २३३ ॥ छन्दस्यसानच् शवजॄश्याम् ॥ २—८३ ॥

**शवसानः** ज्वलनः ॥ **जरसानः** पुरुषः ॥

---

## ॥ २३४ ॥ ऋजिवृधिमन्दिसहिभ्यः कित् ॥ २—८४ ॥

**ऋञ्जसानः** मेघः ॥ **वृधसानः** पुरुषः। "ऋजिव्रजि" इति कचित् पाठः। व्रजसानोऽपि पुरुषः ॥ ईदित्वान्नुम्[2]। **मन्दसानः** जीवः ॥ **सहसानः** मयूरः ॥

---

## ॥ २३५ ॥ अर्तेः गुणः शुट् च ॥ २—८५ ॥

**अर्शसानः** विप्रः ॥

---

1. GD omits कचित्.    २. G ईत्वा-

॥ २३६ ॥ संम्यानच् स्तुवः ॥ २—८६ ॥[1]

संस्तवानः उद्गाता ॥

---

॥ २३७ ॥ युंजिबुधिदृशिभ्यः किच्च ॥ २—८७ ॥[2]

[3]युजानः विप्रः ॥ बुधानः पण्डितः ॥ दृशानः ज्योतिः ॥ एतदन्ताः[4] छान्दसाः ॥

---

॥ २३८ ॥ पषेर्णिच्च ॥ २—८८ ॥

णित् । आनच् स्यात् । पाषाणः ॥

---

॥ २३९ ॥ मुचियुधिभ्यां सन्वच्च ॥ २—८९ ॥

आभ्यामानच् सन्वत् स्यात् । तेन द्विर्वचनम्[5]। "रलो व्युपधात्" इति सन्वद्भाकित्त्वे प्राप्ते बाहुलकान्नित्यम् । मुमुचानः मेघः ॥ युयुधानः साहसिकः सात्यकिश्च । "मुषियुधिभ्याम्" इति पाठे मुमुषाणः हरणेच्छुः ॥ "मुचिबुधिभ्याम्" इति माधवपाठः । तत्र बुबुधानः ज्ञानेच्छुः । "हलन्ताच्च" इति सन्वत् कित्त्वम् ॥

---

॥ २४० ॥ हुर्च्छेः सनो लुक् छलोपश्च ॥ २—९० ॥

जुहूर्छिषा इत्यस्मात् सनो लुकि छलोपे हल्परत्वाभावाददीर्घः[6] । जुहुराणः कुटिलाचारः ॥

---

॥ २४१ ॥ श्वितेर्दश्च[7] ॥ २—९१ ॥

---

1. G omits this sūtra and the commentary.
2. G omits this sūtra too.
3. G omits this sentence.
4. -दन्ताच्छन्दसाम्.
5. G द्वित्वं.
6. G and A त्वाद्.
7. A omits this sūtra.

"श्वितेर्दश्च" इति च[1] टीकासर्वस्वे दृष्टम् । शिश्विदानः शुद्धकर्मा । पापकर्मेत्यन्ये ॥

---

॥ २४२ ॥ तृंस्तृचौ[2] शंसिशसिशासिदसिक्षदादिभ्यः संज्ञायां चानिटौ ॥ २—९२ ॥

ऐभ्यः[3] संज्ञायां कर्तरि च तृंस्तृचावनिटौ स्तः । **शंस्ता** होता ॥ **शस्ता** हिंसकः ॥ **शास्ता** ॥ **दस्ता** क्षयकृत् ॥ **क्षत्ता** सारथिः ॥

---

॥ २४३ ॥ बहुलमन्यत्रापि ॥ २—९३ ॥

उद्गाता, उन्नेता, तृजन्तौ ॥ प्रतिहर्ता, प्रतिप्रस्थाता, प्रशास्ता, प्रस्तोता, तृन्नन्ता ऋत्विगाख्याः ॥

---

॥ २४४ ॥ नप्तृनेष्टृत्वष्टृ[4]क्षत्तृहोतृपोतृजामातृपितृमातृभ्रातृदुहितृ ॥ २—९४ ॥

अत्र **क्षत्ता** रुद्र इति भेदः ॥ पाति **पिता** ॥ मानयति **माता** ॥ दोग्धि सर्वमर्थं पितुः सकाशात् **दुहिता** ॥ "आपो[5] ह्रस्वश्च" इति भोजोक्तेः तृच् । अप्ता यज्ञः[6] ॥

---

॥ २४५ ॥ सुव्यसेः ऋन् ॥ २—९५ ॥

सुतरामस्यते त्यज्यते परस्मै दीयत इति **स्वसा** ॥

---

॥ २४६ ॥ यतेः वृद्धिश्च ॥ २—९६ ॥

**याता** भ्रातृजाया ॥

---

१. G omits च.
२. A चा.
३. G adds एभ्यः संज्ञायां चानिटौ
४. G omits -त्वष्टृ-
५. G अपो.
६. P याज्ञः.

## ॥ २४७ ॥ नञि च नन्देः ॥ २—९७ ॥

ऋन् वृद्धिश्च । ननान्दा पत्युर्भगिनी । बाहुलकान्नञो नलोपाभावः ॥

## ॥ २४८ ॥ दिवेः ऋः ॥ २—९८ ॥

देवृशब्दो देवरार्थः ॥

## ॥ २४९ ॥ नयतेः डिच्च ॥ २—९९ ॥

नृशब्दः ॥

## ॥ २५० ॥ सव्ये स्थः छन्दसि ॥ २—१०० ॥

[1]डिद्दस्यात् । लोकेऽपि भोजः । बाहुलकात् अलुक् । "स्थास्थिन्-स्थूणामिति वाच्यम्" इति स्वृशब्दस्य षत्वम् । सव्येष्ठा सारथिः ॥

## ॥ २५१ ॥ अर्तिसृधृधम्यश्यवितृभ्यो निः ॥ २—१०१ ॥

प्राप्यतेऽग्निरत्र अरणिः ॥ गम्यतेऽनया सरणिः ॥ ध्रियते स्थिर-मवतिष्ठते[2] धरणिः ॥ धमिः सौत्रः । धमनिः सिरा ॥ व्याप्नोति शत्रुं अशनिः, व्याप्नोत्याकाशं वा ॥ रक्ष्यते नृपैः अवनिः ॥ तरति द्यां तरणिः सूर्यः ॥ कृरञ्जिकट्यटिभ्यश्च भोजः । करणिः अनुकृतिः ॥ रञ्जेः निपातनान्न-लोपः । [3]रज्यन्त्यत्र जना रजनिः निशा ॥ कटनिः शैलमेखला ॥ प्राप्यते ज्यया अटनिः चापाग्रम् ॥

## ॥ २५२ ॥ आङि शुचेः सनश्छन्दसि ॥ २—१०२ ॥

बाहुलकात् लोकेऽपि । शुचेः दीप्त्यर्थात् समन्तात् ज्वलितुमिच्छन् आशुशुक्षणिः । बाहुलकात् शुचेः सन्यनिट्त्वम् ॥

---

१. G omits डिद्द........सव्येष्ठा.
२. G omits मवतिष्ठते.
३. G रज्यन्त्रस्य-

॥ २५३ ॥ कृषेरादेश्च चः[1] ॥ २—१०३ ॥

कृष्यते कर्मभिः चर्षणिः नरः ॥

---

॥ २५४ ॥ अदेर्मुट् च ॥ २—१०४ ॥

अद्मनिः अग्निः ॥

---

॥ २५५ ॥ वृतेश्च ॥ २—१०५ ॥

वर्तन्तेऽस्यां जनाः वर्तनिः । 'मुट् च' इत्यनुवृत्त्या वर्त्मनिः इत्यपि माधवः । सापि मार्ग एव ॥

---

॥ २५६ ॥ क्षिपेः किच्च ॥ २—१०६ ॥

क्षिपणिः आयुधम् ॥

---

॥ २५७ ॥ अर्चिशुचिहुसृपिछृदिच्छादिभ्य इसिः[2] ॥ २—१०७ ॥

अन्त्य इकार इत् । पूज्यते अर्चिः ॥ दीप्यते शोचिः ॥ हविः ॥ सर्पति स्यन्दते सर्पिः ॥ छर्दिः वमनम् ॥ णिलोपः । "इस्मन्त्र" इति ह्रस्वः । छदिः[3] गृहोर्ध्वावरणम्[4] ॥ रुचेश्च भोजः । रोचिः ॥

---

॥ २५८ ॥ बृंहेर्नलोपश्च ॥ २—१०८ ॥

लघूपधगुणः । बृंहयति धर्मकृत्यानि बर्हिः दर्भोऽग्निश्च । वर्धते वा ॥

---

॥ २५९ ॥ द्युतेरिसिन्नादेश्च जः ॥ २—१०९ ॥

ज्योतिः ॥

---

1. P च.
2. G -हसृपि-
3. A छदिः.
4. A -णः.

॥ २६० ॥ वसौ रुचेः संज्ञायाम् ॥ २—११० ॥

वसुरोचिः अग्निः ॥

---

॥ २६१ ॥ भुवः कित् ॥ २—१११ ॥

भुविः शरत् ॥

---

॥ २६२ ॥ [1]सहेर्धश्च ॥ २—११२ ॥

सधिः [2]सत्त्वम् ॥

---

॥ २६३ ॥ पिबतेस्थु[3]क् ॥ २—११३ ॥

पाथिः सूर्यः ॥

---

॥ २६४ ॥ जनेरुसिः ॥ २—११४ ॥

जनुः जन्म ॥

---

॥ २६५ ॥ मनेर्धश्छन्दसि ॥ २—११५ ॥

अन्त्यस्य धः । [4]मधुः सान्तः । क्षौद्रार्थः ॥

---

॥ २६६ ॥ अर्तिपॄवपियजितनिधनित्वपिभ्यो नित् ॥ २—११६ ॥

व्याप्नोति अरुः व्रणः ॥ पूर्यते सिराभिः पर्व ॥ [5]उप्यन्ते सर्वदुःखान्यत्र वपुः ॥ इज्यतेऽनेन यजुः ॥ तनुः शरीरम् ॥ धनुः ॥ त्रपुः सीसम् ॥ अन्त्यास्त्रयः [6]उदात्ता अप्युक्ताः ॥

---

॥ २६७ ॥ प्रेऽदः ॥ २—११७ ॥

प्रपूर्वाददेः उसिः नित् स्यात् । प्रादुः प्रकाशे अव्ययम् ॥

---

१. G सहो धुश्च.

२. G स्वत्वम्.

३. GD and P add च.

४. G omits this sentence.

५. G omits उप्यन्ते सर्व-

६. G उदन्ताः.

## ॥ २६८ ॥ एतेर्णिच्च ॥ २—११८ ॥

ऐतीति आयुः ॥

## ॥ २६९ ॥ चक्षेः[1] शिच्च ॥ २—११९ ॥

चक्षिङः[3] ख्याञभावः । पश्यन्त्यनेन चक्षुः ॥

## ॥ २७० ॥ बहुलमन्यत्रापि ॥ २—१२० ॥

चक्षेः शित्त्वमन्यत्रापि स्यात् । तेनास्यानुदात्तेत्त्वात् युचि ख्याञभावः । विचक्षणः ॥

## ॥ २७१ ॥ मुहेः कित् ॥ २—१२१ ॥

उसिः कित् स्यात् । मुहुः ॥

## ॥ २७२ ॥ कृगृशृपृचतिभ्यः ष्वरच् ॥ २—१२२ ॥

कर्वरः व्याघ्रः[4] ॥ [5]गर्वरः दर्पः ॥ शर्वरः सायाह्नः ॥ षित्त्वात् ङीष् । शर्वरी रात्रिः[6] ॥ पर्वरः[7] कुटिलकेशः ॥ चतेः गत्यर्थवृत्तेः गम्यतेऽत्र चत्वरः ॥

## ॥ २७३ ॥ नौ सदेः ॥ २—१२३ ॥

निषीदन्ति लगन्त्यत्र पदार्था इति निषद्वरः पङ्कः । "सदिरप्रतेः" इति षत्वम् ॥

इत्युणादिवृत्तौ प्रक्रियासर्वस्वे द्वितीयः पादः ॥



1. G omits this sentence.
2. G omits this sūtra.
3. P adds शित्त्वात्.
4. G omits this word.
5. G omits this word.
6. G and A omit रात्रिः.
7. G -रम्.

## ॥ अथ तृतीयः पादः ॥

---

### ॥ २७४ ॥ छित्वरछत्वरधीवरपीवरमीवर[1]चीवरतीवर-नीवरगह्वरकट्वरसंयद्वराः ॥ ३—१ ॥

**छित्वरः** कार्यातिक्रमी ॥ **छत्वरः** निकुञ्जः । चत्वरमिति माधव-पाठः ॥ दधाति गृ[2]ह्णाति मत्स्यान् **धीवरः** ॥ [3]प्यायतेः **पीवरः** ॥ **मीवरः** हिंस्रः ॥ चीयते आर्च्यते विस्तीर्यते वा **चीवरः** ॥ **तीवरः** म्लेच्छः ॥ **नीवरः** गम्भीरः ॥ गाह्यते **गह्वरः** ॥ सिञ्चति **कट्वरः** द्रवः ॥ **संयद्वरः** अनूपदेशः । उपह्वरोदुर्म्बर[4]कूबरतूवरादयश्च भोजोक्ताः । उपह्वरं समीपम् ॥ कूबरः रथाङ्गम्[5] ॥ [6]तूवरः निश्मश्रुः ॥ आद्युक्तेः डंबरादि[7] ॥

---

### ॥ २७५ ॥ इण्सिञ्दीङुष्यविभ्यो नक् ॥ ३—२ ॥

व्याप्नोति विश्वं **इनः** ॥ **सिनं** शरीरम् ॥ **दीनः** ॥ **उष्णम्** ॥ "ज्वरत्वर" इत्यूठ् । **ऊनः** ॥ जेश्च भोजः । अभिभवति वैदिकान् जिनः बुद्धः ॥

---

### ॥ २७६ ॥ फेनमीनौ ॥ ३—३ ॥

फणत्यूर्ध्वं गच्छति **फेनः** ॥ मीयते हिंस्यते **मीनः** ॥

---

### ॥ २७७ ॥ कृषेर्वर्णे ॥ ३—४ ॥

कर्षति दृष्टिं **कृष्णः** ॥

---

१. G omits-मीवर-
२. G omits गृह्णाति.
३. GD omits this sentence.
४. G -दुम्बर-
५. GD ङ्गः.
६. G रूपरो.
७. GD संब-

॥ २७८ ॥ बंधेर्ब्रधिबुधी च ॥ ३—५ ॥

बधेर्नक् । एतावादेशौ स्तः । उदयेन लोकान् कर्मणि बध्नाति ब्रध्नः ॥ पृथ्वीबद्धत्वात् बुध्नः मूलम् ॥

---

॥ २७९ ॥ धापॄवस्यज्यतिभ्यो नः ॥ ३—६ ॥

धीयन्ते भक्षणार्थं[2] उद्धीयन्ते धानाः ॥ पूरयति तरुं पर्णम् ॥ वसन्त्यनेन वणिजः ॥ वस्नं मूल्यम् ॥ अजेर्वी । क्षिपति धर्मं वेनः ॥ अत्नः वायुः । सिवेश्च भोजः । वस्य ऊठ् । गुणः । यण् । स्योनं[3] मुखम् ॥

---

॥ २८० ॥ पणेरिच्चोपधायाः ॥ ३—७ ॥

ईत्त्वसामर्थ्यान्न गुणः । पिण्णः तिलकल्कः ॥

---

॥ २८१ ॥ लक्षेरट् च ॥ ३—८ ॥

लक्षेः नः । तस्य अट् च । लक्ष्मणा दुर्योधनसुता ॥

---

॥ २८२ ॥ सिवेष्टेर्यू च ॥ ३—९ ॥

इवशब्दस्य यूभावः । स्यूना रशना ॥

---

॥ २८३ ॥ कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् ॥ ३—१० ॥

एभ्यो नो नित् स्यात् । कीर्यते शब्दोऽत्र कर्णः । किरति शरान् धनं वा कर्णः ॥ आवृणोति द्रव्यमिति पूर्वं रक्तादिः वर्णः । इह तु वृणुते स्वधर्ममिति ब्राह्मणादिरिति[8] भेदः ॥ जर्णः तरुः ॥ सिनोति बध्नाति रिपुं सेना ॥

---

१. G बन्धे-
२. G थर्थं.
३. G स्योनः.
४. G बत्व-
५. G विण्णः.
६. A रिट्.
७. G, GD and P नक्.
८. A and G omit इति.

वेगेन द्रवति द्रोणः । द्रूयते प्राप्यते व्रीह्यादिनेति मानपात्रं च ॥ पन्न मानम् । प्राणन्त्यनेन अन्नम् ॥ स्वप्नः ॥ त्रश्च भोजः । प्लवते वल्गति[1] तर्णः[2] वत्सः ॥

॥ २८४ ॥ धेट ई च ॥ ३—११ ॥

गुणः । [3]धेना वाक्[4] ॥

॥ २८५ ॥ तृषिशुषिरसिभ्यः कित् ॥ ३—१२ ॥

निच्च स्यात् । तृष्णा ॥ शुष्णः दैत्यः ॥ रस्नः अश्वः ॥

॥ २८६ ॥ सुञो दीर्घश्च ॥ ३—१३ ॥

सूना वधस्थानम् ॥

॥ २८७ ॥ रमेस्त च ॥ ३—१४ ॥

रमतेऽनेन रत्नम् ॥

॥ २८८ ॥ रास्नासास्नास्थूणावीणाः ॥ ३—१५ ॥

रास्ना रज्जुः ॥ सास्ना ॥ तिष्ठति स्थूणा । [5]क्षिप्यते नखैः वीणा । सुम्नद्युम्न[6]निम्नशिश्नाभीक्ष्णचौत्नादयश्च भोजोक्ताः । सुम्नं सुखम् ॥ द्युम्नं द्रविणम् ॥ च्योत्नी कांस्यादि पात्री ॥

॥ २८९ ॥ गादाभ्यां इष्णुच्[7] ॥ ३—१६ ॥

आभ्यामिष्णुच् । "आद्गुणः" । गेष्णुः रङ्गोपजीवी ॥ देष्णुः दाता ॥

---

१. P वल्गति.
२. G पर्णो.
३. G इच.
४. G omits the word.
५. G and A omit this sentence.
६. G omits -द्युम्न-
७. GD, A and P श्चेष्णुच्.

॥ २९० ॥ कृत्यशूभ्यां क्स्नः[1] ॥ ३—१७ ॥

[2]कित्त्वादगुणः । वेष्टयति व्याप्नोति **कृत्स्नम्** ॥ "छशां षः" । "षढोः कः" । षत्वम् । **अक्ष्णं** खण्डम् ॥

॥ २९१ ॥ तिजेर्दीर्घश्च ॥ ३—१८ ॥

झलि "चोः कुः" चर्त्वषत्वे । "तिज निशाने" **तीक्ष्णम्** ॥

॥ २९२ ॥ श्लिषेरच्चोपधायाः ॥ ३—१९ ॥

षस्य कः । श्लिष्यति स्पर्शे[3] **श्लक्ष्णम्** स्निग्धम् ॥

॥ २९३ ॥ यजिमनिशुन्धिदसिजनिभ्यो युः[4] ॥ ३—२० ॥

बाहुलकादनादेशाभावः । **यज्युः** ऋत्विक् ॥ ज्ञायते परैः **मन्युः** ॥ **शुन्ध्युः** पवित्रम् ॥ ण्यर्थान्तर्भावात् उपक्षीणोऽत्यर्थं **दस्युः** ॥ **जन्युः** प्राणी ॥

॥ २९४ ॥ भुजिमृङ्भ्यां युक्त्युकौ ॥ ३—२१ ॥

क्रमात् स्तः । **भुज्युः** ऋषिः ॥ **मृत्युः** ॥

॥ २९५ ॥ सर्तेरयूः ॥ ३—२२ ॥

**सरयूः** नदी । वृत्तौ "सर्तेरयुः" इत्युदन्तमुक्त्वा सरयुः इत्युदाहृत्य "अप्राणिजातेः" इत्यूङि सरयूः इत्युक्तम् ॥

॥ २९६ ॥ पानीविषिभ्यः पः ॥ ३—२३ ॥

पिबति सुखं **पापम्** ॥ **नेपः** पुरोहितः ॥ **वेष्पः** जलम् ॥ अलिशीङ्भ्यां च भोजः । **अल्पः** ॥ शेते **शेपः** ॥

---

१. A क्सः.
२. G omits this sentence.
३. A and GD स्पर्शः.
४. G युच्.
५. G क्सम्.

|| २९७ || च्युवः किद्दीर्घश्च || ३—२४ ||

च्यूपः संग्रामः ||

---

|| २९८ || स्त्यः संप्रसारणमूश्च || ३—२५ ||

स्त्यस्य प्रसारणे इत्वे पूर्वरूपत्वे च कृते ऊत्वम् । स्तूपः संघातः । 'उश्च' इति पठित्वा स्तुप इत्याह माधवः ||

---

|| २९९ || [1]सुशॄभ्यां निच्च || ३—२६ ||

नित्पः स्यात् । ऊश्चान्तादेशः । सूयते गवा सूपः || ऋतो रपरत्वात् तुषादयो विशीर्यन्तेऽनेन शूर्पः || किरतेश्च भोजः । कूर्पं भ्रूमध्यम् ||

---

|| ३०० || कुयुभ्यां च || ३—२७ ||

नित् प ऊश्च स्यात् । कौति जलेन कूपः || यौति पशुरत्र यूपः ||

---

|| ३०१ || खष्पशि[2]पशष्पबाष्पपर्परूपतल्पाः || ३—२८ ||

खष्पः बलात्कारः || शिष्पः कालयोगः || शस्यते हिस्यते पशुभिः शष्पं तृणम् || वातेष्षुक् । निर्गच्छति बाष्पम् । पृणाति पालयति जलात् पर्पः प्लवः || रौति रूपः हरिणः || तलति प्रतितिष्ठत्यत्र तल्पः । शिल्पक्षुपनी-पचम्पाशम्पादयश्च भोजोक्ताः । शिल्प्यते आरभ्यते शिल्पम् || क्षुपः ह्रस्वशाख-स्तरुः || नीपः वृक्षभेदः || चम्पा पुरी || शाम्यति तमोऽनया शम्पा विद्युत् । [5]चम्पा विद्युदिति केचित् || आद्युक्तेः पम्पा सरः ||

---

१. G सु-

२. G शिल्प-

३. G omits शिल्प……पुरी but has instead शिष्पक्षुपनीपचंवा पुरी.

४. A and G omit शम्पा.

५. G omits चम्पा विद्युत्. GD चम्पा अपि.

## ॥ ३०२ ॥ स्तनिहृषिपुषिशुषिगदिमदिभ्यो णेरित्नुच् ॥ ३—२९ ॥

“अयामन्त” इति णेरयादेशः। **स्तनयित्नुः** मेघः॥ **हर्षयित्नुः** सुजनः॥ **पोषयित्नुः** भर्ता[1]॥ **शोषयित्नुः** सूर्यः॥ **गदयित्नुः** वाग्मी॥ **मदयित्नुः** शीधुः॥ घुषिगलिमण्डिजनिनन्दिभ्यश्च भोजः। घोषयित्नुः पिकः॥ गलयित्नुः मेघः॥ मण्डयित्नुः कामुकः॥ जनयित्नुः पिता॥ नन्दयित्नुः पुत्रः॥

---

## ॥ ३०३ ॥ कृहनिभ्यां क्नुः ॥ ३—३० ॥

**कृणुः** खड्गादिकोशकृत्॥ बाहुलकात् अझलादावपि क्नित्यनुनासिकलोपः। **हनुः**। पुनरुक्तिः स्वरभेदात्[2]॥ ‘कृहनिभ्यां क्त्नुः’ इति च पाठः[3]। कृत्नुः ऋषिः॥ हत्नुः हन्ता॥

---

## ॥ ३०४ ॥ गमेः सन्वच्च ॥ ३—३१ ॥

गमेः क्नुः सन्वत् स्यात्। प्राग्वदनुनासिकलोपः। **जिगनुः** अग्निः। अत्रापि क्त्न्वधिकारे जिगत्नुः॥

---

## ॥ ३०५ ॥ दाभाभ्यां नुः ॥ ३—३२ ॥

**दानुः** दाता॥ **भानुः**॥

---

## ॥ ३०६ ॥ वचेर्गश्च ॥ ३—३३ ॥

**वग्नुः** वाग्मी॥

---

## ॥ ३०७ ॥ धेट इच्च ॥ ३—३४ ॥

गुणः। पीयते वत्सेन **धेनुः**॥

---

1. G माता.
2. G omits कृहनि.........भेदात्.
3. G omits इति च पाठः.

॥ ३०८ ॥ सुवः कित् ॥ ३—३५ ॥

**सूनुः** ॥

---

॥ ३०९ ॥ जहातेर्द्वे[1]ऽन्तलोपश्च ॥ ३—३६ ॥

[2]द्वित्वमन्त्यलोपश्च । जहात्यधर्मं **जह्नुः** ॥

---

॥ ३१० ॥ स्थो णुः ॥ ३—३७ ॥

स्थाधातोः णुः स्यात् । **स्थाणुः** ॥

---

॥ ३११ ॥ अजिवृरीभ्यो नित्[3] ॥ ३—३८ ॥

[4]एभ्यो णुः नित् स्यात् । अजेर्वीत्वम् । गुणः । निर्गच्छति शब्दोऽस्मात् **वेणुः** ॥ **वर्णुः** नदः ॥ रीयते च्यवते **रेणुः** ॥

---

॥ ३१२ ॥ विषेः किच्च ॥ ३—३९ ॥

**विष्णुः** ॥

---

॥ ३१३ ॥ कृदाधाराचिकलिभ्यः कः ॥ ३—४० ॥

बाहुलकात् कस्येत्वम् न । करोति वेगगतिं **कर्कः** श्वेताश्वः ॥ **दाकः** यज्ञः ॥ **धाकः** ओदनः ॥ दानं कुर्वन्त्यस्यां राति सुखं वा **राका** ॥ अर्चेः सेट्त्वेऽपि "तितुत्र" इति कस्यानिट्त्वम् । "चोः कुः" । अर्च्यते **अर्कः** ॥ क्षिप्यते **कल्कं** मलम् ॥ कुतुस्तूयिभ्यश्च भोजः । कौति **कोकः** ॥ क्रमाद्वर्धते **तोकं** बालः ॥ अल्पस्य कौतुककरत्वात् स्तूयते जनैः **स्तोकः** ॥ ऊयेर्यलोपः । **ऊकः** समूहः ॥

---

1. A and GD च लोपश्च.
2. G omits द्वित्व........श्च.
3. G निच्च.
4. G omits एभ्यो........स्यात्.

## ॥ ३१४ ॥ सृवृभूशुषिमुषिभ्यः कित् ॥ ३—४१ ॥

**सृका** आयुधभेदः ॥ **वृकः** ॥ **भूकः** कालः ॥ **शुष्कः** नीरसः[2] । निष्ठया सिद्धेऽपि उक्तिः अभूतकाले सिद्ध्यर्थम् ॥ वस्त्रादिना मुष्यते तिरोधीयते **मुष्कः** ॥

---

## ॥ ३१५ ॥ शुकवल्कोल्काः ॥ ३—४२ ॥

शोभते **शुकः** । शोः गत्यर्थाद्वा ॥ संव्रियतेऽनेन **वल्कं** तरुत्वक् ॥ ओषति दहति **उल्का** । षस्य लः ॥ " निष्कतुरुष्कोदर्कालर्कशुल्कफल्ककिञ्जल्कोल्काछेककेकादयः " इति भोजः । अलर्कः उन्मत्तश्वा[3] ॥ " शल गतौ " गच्छत्यनेन दत्तेन शुल्कः श्वा ॥ फल्कः अन्धकभेदः ॥ किञ्चिदल्पः सन् जलत्यतीक्ष्णो भवति किञ्जल्कः ॥ " कै शब्दे " केका ॥

---

## ॥ ३१६ ॥ इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥ ३—४३ ॥

एति सङ्ख्यान्तरेषु व्याप्नोति **एकः** ॥ बिभेति सर्पादिः **भेकः** ॥ " कै[4] " **काकः** ॥ पिबति स्तनं **पाकः**[5] । पाति स्वबलमिति दैत्यश्च[6] ॥ शलति गच्छति अवयविभ्यः **शल्कं** शकलम्[7] ॥ सततं गम्यते **अत्कं** समीपम् ॥ " मर्चिः " सौत्रो गत्यर्थः । धावति **मर्कः** मार्जारः ॥

---

## ॥ ३१७ ॥ नौ हः ॥ ३—४४ ॥

निलीय गच्छति **निहाका** गोधा ॥

---

## ॥ ३१८ ॥ स्यम ईट् च ॥ ३—४५ ॥

**स्यमीकं** जलम् । पुंसि मेघश्च ॥

---

१. G and GD कुसृ-

२. G space is left out for writing नीरसः.

३. G त्तश्च.

४. G omits कै.

५. G omits पाकः.

६. G दैत्यश्च[श्च] पाकः.

७. G omits शल्कम्.

॥ ३१९ ॥ अजियुधूनीभ्यो दीर्घश्च[1] ॥ ३—४६ ॥

अजेर्वी । वीका अक्षिमलम् ॥ यौति केशेषु यूका ॥ धूका पताका ॥ नीका घृतम् ॥ शुघुभ्यां च भोजः । शूकः ॥ "घुङ् शब्दे" घूकः उलूकः ॥

---

॥ ३२० ॥ ह्रियो रश्च लो वा[2] ॥ ३—४७ ॥

ह्रीकः पिता ॥ ह्लीकः लज्जः ॥

---

॥ ३२१ ॥ शकेरुनोन्त्योन्त्युनयः ॥ ३—४८ ॥

शक्नोति द्यां गन्तुं शकुनः शकुन्तः शकुन्तिः शकुनिः[3] ॥

---

॥ ३२२ ॥ भुवो झिच्[4] ॥ ३—४९ ॥

"झोऽन्तः" । भवन्तिः कालः ॥ अवेश्च[5] भोजः । अवन्तिः नृपः ॥

---

॥ ३२३ ॥ कन्युच् क्षिपेश्च ॥ ३—५० ॥

क्षिपेः भुवश्च कन्युच्[6] । क्षिपण्युः वायुः ॥ भुवन्युः अग्निः ॥

---

॥ ३२४ ॥ चनुङ्[7] नुदेश्च ॥ ३—५१ ॥

नुदेः क्षिपेः भुवश्च[8] चनुङ् । नुदनुः[9] क्षिपनुश्च वायुः ॥ भुवनुः भवितव्यता ॥ नदिवदिपतिदाभ्यश्च भोजः । नदनुः मेघः ॥ वदनुः वक्ता ॥ पतनुः पक्षी ॥ ङित्त्वादाल्लोपः । दनुः असुरमाता ॥

---

१. G -युधी-
२. G लोपः.
३. G omits this word.
४. A झि.
५. G अपे-
६. P omits कन्युच्.
A omits क्षिपेः भुवश्च कन्युच्.
७. G अनुङ् नदेश्च.
८. GD omits भुवः.
९. G नदनुः.

## ॥ ३२५ ॥ कृवृतृदारिभ्य उनन् ॥ ३—५२ ॥

करोऽत्यन्यहितं **करुणः** दयावान्। करोति हितमनयेति करुणा दया च ॥ व्रियते प्रार्थ्यते **वरुणः** ॥ बाल्यं तरति **तरुणः** ॥ दारयति पैरान् **दारुर्णः** ॥

---

## ॥ ३२६ ॥ लो रश्च लो वा ॥ ३—५३ ॥

तरतेरुंननि परे रेफस्य लत्वं वा स्यात्। **तलुनः** अपि तरुण एव ॥

---

## ॥ ३२७ ॥ क्षुधिपिशिमिथिभ्यः कित् ॥ ३—५४ ॥

**क्षुधुनः** बुभुक्षावान् ॥ पिंशति विभजति गूढार्थं **पिशुनः** ॥ "मिथृ संगमे" **मिथुनर्म्** ॥ "फलेः गुक् च" इति भोजः। फलति शुभं फल्गुनी नक्षत्रम् ॥

---

## ॥ ३२८ ॥ अशेर्लशश्च ॥ ३—५५ ॥

**लशुनं** पलण्डुभेदः ॥

---

## ॥ ३२९ ॥ अर्जेर्णिलुक् च ॥ ३—५६ ॥

अर्जेरुनन् णिलुक् च। "अर्ज प्रतियत्ने" निर्मलीकृतत्वात् धवलो **अर्जुनः**। अर्जयति श्रियमर्जुनः ॥

---

## ॥ ३३० ॥ तृणाख्यायां चित् ॥ ३—५७ ॥

अर्जुनाख्यं तृणम्। स्वरे भेदः ॥

---

१. G कृ-
२. G omits this sentence.
३. G वरान्.
४. GD दारुणं.
५. G रूरन्.
६. G omits पिंशति.
७. GD गृध्रार्थं.
८. GD मिथुनः.
९. GD लश.

॥ ३३१ ॥ अर्तेश्च ॥ ३—५८ ॥

चिदुनन् स्यात् । गच्छति[1] अरुणः ॥

॥ ३३२ ॥ धारेः णिलुक् च ॥ ३—५९ ॥

णिलुकि वृद्धयभावः । धरुणः धर्ता । अस्य नित्त्वं चित्त्वं च विना प्रत्ययस्वर एव दृष्टः ॥

॥ ३३३ ॥ अजियमिशीङ्भ्यश्च ॥ ३—६० ॥

उनन् स्यात् । प्राप्यत्वात् वयुनं भद्रम् ॥ उपरमयति पापं यमुना ॥ शयुनः अजगरः । वयुनादेरपि धरुणवत्स्वरो दृष्टः ॥

॥ ३३४ ॥ वृतॄवदिहनिकमिकषियुमुचिभ्यः[2] सः ॥ ३—६१ ॥

"तितुत्र" इति सस्येडभावः । वर्षम् ॥ तर्षः सूर्यः ॥ चर्त्वम् । वदति किञ्चित् वत्सः बालः ॥ हन्ति सम्यग्गच्छति हंसः ॥ काम्यते कंसः पात्रम् ॥ "षढोः कः" कष्यते भुजेन कक्षः । कषति हिनस्तीति वनं च ॥ संगच्छते योषा ॥ "चोः कुः" मोक्षः ॥ "युमाभ्यां षः" इति भोजोक्त्या माषः ॥

॥ ३३५ ॥ प्लुषेरच्चोपधायाः ॥ ३—६२ ॥

प्लक्षः ॥ यजिवामाभ्यश्च भोजः । व्रश्चादि षः । कः । सेव्यते यक्षः । वासा आटरूषः ॥ मासः ॥

॥ ३३६ ॥ मनेर्दीर्घश्च ॥ ३—६३ ॥

मन्यते काङ्क्ष्यते मांसम् ॥

॥ ३३७ ॥ अशोर्देवने ॥ ३—६४ ॥

"छशां षः" । कः । द्यूतकर्मण्यश्नुते अक्षम् ॥

---

1. G omits गच्छति.   2. G and A omit युमुचिभ्यः.

## ॥ ३३८ ॥ नदेः कश्च ॥ ३—६५ ॥

नक्षं नभः ॥

---

## ॥ ३३९ ॥ स्नुव्रश्चिकृत्यृषिभ्यः[1] कित् ॥ ३—६६ ॥

**स्नुषा** ॥ ग्रहिज्यादिना प्रसारणम् । सोपधत्वात् "स्कोः" इति सलोपः । व्रश्चादि षैत्वम्[2] । कत्वम् । व्रश्च्यते **वृक्षः** ॥ **कृत्सम्**[3] उदकम् ॥ गच्छति **ऋक्षं** नक्षत्रम् ॥ रिषिशॄभ्यां च भोजः । रलयोरभेदात् लिक्षा क्षुद्रजन्तुः ॥ "ऋत इत्" दीर्घः । शीर्यते मृतौ शीर्षम् ॥

---

## ॥ ३४० ॥ ऋषेर्जातौ ॥ ३—६७ ॥

**ऋक्षः** वानरः । पूर्वेण सिद्धेऽप्युक्तेः फलं चिन्त्यम् ॥

---

## ॥ ३४१ ॥ गृधिपण्योः दकौ च ॥ ३—६८ ॥

**गृत्सः** गृध्नुः ॥ पतन्त्यनेन **पक्षः** । भोजस्त्वाह "अमेर्नित्" । सो नित् स्यात्[4] । अंसः ॥

---

## ॥ ३४२ ॥ उन्देः नलोपश्च ॥ ३—६९ ॥

सँ[5] च नित् स्यात् । **उत्सः** निर्झरः इति ॥

---

## ॥ ३४३ ॥ अशेः सरन्[6] ॥ ३—७० ॥

"तितुत्र" इति सस्येडभावः । अश्नुते व्याप्नोति पदानि **अक्षरम्** ॥ क्यजिमाभ्यश्च भोजः । केसरः ॥ अजेर्वी । वेसरः चमरः[7] ॥ मासरः आचामः ॥

---

1. A -कृषिभ्यः.
2. G षः.
3. A, GD and P कृत्स्नमुदरम्.
4. G omits स्यात्.
5. G सञ्च.
   A सश्च.
6. G सरः.
7. GD अश्वतरः.

॥ ३४४ ॥ वसेश्च ॥ ३—७१ ॥

सरन् स्यात् । "सःस्य" इति तः । वसत्यस्मिन् ऋतुगणो **वत्सरः** ॥

॥ ३४५ ॥ [1]संपूर्वाच्चित् ॥ ३—७२ ॥

स्वरे भेदः । संवत्सरः ॥ परिवत्सरः ॥

॥ ३४६ ॥ कृधूमदिभ्यः कित् ॥ ३—७३ ॥

**कृसरः** तिलमिश्रान्नम् ॥ धूयते निरस्यते **धूसरः** ॥ माद्यति मुह्यत्यनेन **मत्सरः** ॥ केश्च भोजः । किसरः गन्धद्रव्यम् ॥

॥ ३४७ ॥ पते रश्च लो[2] वा ॥ ३—७४ ॥

[3]पतेः सरन् रस्य लत्वं च वा स्यात् । **वत्सरः** **वत्सलः** गोमान् ॥

॥ ३४८ ॥ तन्यृषिभ्यां क्सरन् ॥ ३—७५ ॥

कित्त्वात् "अनुदात्तोपदेश" इति नलोपः । **तसरः** कौशेयसूत्रम् ॥ **ऋक्षरः** कण्टकः ॥

॥ ३४९ ॥ पीयुक्कणिभ्यां कालन् ह्रस्वः [4]प्रसारणं च ॥ ३—७६ ॥

[5]पीयेः ह्रस्वः । कणेः प्रसारणम् । पीयतिः सौत्रः । **पियालः**[6] चारः ॥ **कुणालः** पक्षी ॥ [7]तमिविडिमृणिकुलिपलिपञ्चिभ्यश्च भोजः । तमालः ॥

---

1. G, P and A संपूर्वात्.
2. G कः.
3. G adds लोपः.
4. A and G संप्र.
5. G omits पीयेः......णम्.
6. G पीयालः.
7. G तमिविढ्मुिणि-

बिडालः मार्जारः ॥ "मृण हिंसायाम्" मृदुत्वात् पीड्यते मृणालम् ॥ बन्धुमत्वात्[1] कुलालः ॥ लघुत्वात् गच्छति वायुना पलालम् ॥ विस्तृतत्वात् पञ्चालाः ॥ पुनश्चाह "कम्पेर्नलोपश्च"। भेदनावस्थायां चलति घटात् कपालम् ॥ "भञ्जेर्गश्च" नलोपश्च । भगालं कपालमेव ॥ "सर्तेर्गुक् च" कालन्नपि । सरति सृगालः ॥ "कीलालकङ्कालहिन्तालवेतालजम्बालादयश्च" कीलति प्रतितिष्ठति देहे कीलालं रक्तं जलं च ॥ कङ्कति गच्छति कङ्कालः कलेबरम्[2] ॥ हिन्तालः तरुः ॥ वेति गच्छति अश्नाति[3] खादति वा मांसं वेतालः ॥ जमति गिरति वन्यवस्तूनि जम्बालः ॥ आद्युक्तेः चक्रवालकरवाललवालादयः इति ॥

---

## ॥ ३५२ ॥ कुटिकुषिभ्यां काकुः ॥ ३—७९ ॥

कुटाकुः दरिद्रः ॥ कुषाकुः मूषिकः ॥ शिवेश्च भोजः । शिवाकुः ऋषिः ॥

---

## ॥ ३५३ ॥ चटिकटिभ्यामाकुः ॥ ३—८० ॥

कुचाटः मुनिः ॥ कटाकुः कुटुम्बपोषकः ॥ "चेरुपन्योर्डित्" इति भोजः । उपचाकुः मुनिः ॥ निचाकुः निपुणः ॥

---

## ॥ ३५४ ॥ सर्तेर्दुक् च ॥ ३—८१ ॥

सृदाकुः वायुः ॥

---

1. G बन्धुत्वात्.
2. G omits कलेबरम्.
3. G अश्नोति.

॥ ३५५ ॥ पर्देर्नित् संप्रसारणमल्लोपश्च ॥ ३—८२ ॥

शूत्कारादिकुत्सितशब्दं करोति **पृदाकुः** सर्पः[1] ॥

---

॥ ३५६ ॥ सृयुवचिभ्योऽन्युजागूजक्नुचः[2] ॥ ३—८३ ॥

[3]**सरण्युः** मेघः ॥ योरागूच् । मिश्रीक्रियते **यवागूः** ॥ वचेरक्नुच् । **वचक्नुः** विप्रः ॥

---

॥ ३५७ ॥ आनकः शीङ्भियः ॥ ३—८४ ॥

**शयानकः** अजगरः ॥ **भयानकः**[4] ॥ लूधूशिङ्घिधाञ्भ्यश्च । लवानकः देशः ॥ शिङ्घानकः श्लेष्मा ॥ धानाकः संग्रामः ॥ "अनेर्डित्" इति भोजः । डित्त्वात् सर्वलोपः । आनकः पटहः ॥

---

॥ ३५८ ॥ उल्मुकदर्विहोमिनः[5] ॥ ३—८५ ॥

अचेर्लत्वम् । समवैत्यग्निना **उल्मुकः** ॥ दृणाति विभजत्यन्नं **दर्वि** भिस्सटा[6] ॥ **होमी** सर्पिः ॥

---

॥ ३५९ ॥ ह्रियः कुग्रश्च लो वा[7] ॥ ३—८६ ॥

**ह्रीकुः** ह्लीकुश्च लज्जावान् । "कैशीशमीरमिभ्यः कुः" इति भोजः । आत्वम् ॥ काकुः सविकारशब्दः ॥ शेकुः उद्भिद्भेदः ॥ स्थिरत्वात् शाम्यतीव शङ्कुः ॥ रमते वने रङ्कुः ॥

---

॥ ३६० ॥ [8]हसिमृग्रिण्वमिदमिलूपूधुर्विभ्यस्तन् ॥ ३—८७ ॥

---

1. G adds सृयुवचिभ्योर्नित्.
2. A -क्नुच्.
3. GD and P add सर्तेरन्युच्.
4. G adds आणको लुधुशिघिधा-ञ्भ्यः.
5. A, GD and P होमिन्.
6. A सट्ट. GD and P सिटा.
7. G लोपः.
8. G repeats हसि.

"तितुत्र" इति इडभावः। हसेरुपादानार्थवृत्त्या हस्तः॥ मर्तः[1] मनुष्यः॥ गिरत्यर्पितवस्तु गर्तः॥ एति नाना गच्छति एतः सैारङ्गवर्णः[2]॥ वातः॥ अमति समाप्नोत्यनेनेति अन्तं समापनम्॥ दमयति चर्वणीयानि दन्तः॥ लोतः कीटभेदः॥ पवतेः गतिवृत्त्या गच्छन्त्यनेनाब्धौ पोतः॥ "लोपो व्योः" इति वलोपः। हिनस्त्यन्यान् धूर्तः॥ वसेश्च भोजः। "वसु स्तम्भे" अज्ञत्वात् बस्तः छागः॥

---

## ॥ ३६१ ॥ [3]नञ्याप इट् च ॥ ३—८८ ॥

बाहुलकान्नलोपो न। अशुद्धत्वात् नाप्यते नापितः॥

---

## ॥ ३६२ ॥ तनिमृङ्भ्यां किच्च ॥ ३—८९ ॥

कित्त्वादनुनासिकलोपः। निषेकादिक्रियां तनोति ततः पिता। याचनस्य मरणतुल्यत्वात् म्रियत इवानेन मृतं[4] याचितम्॥ "हुर्छेर्मुट् च" इति भोजः। हुर्छेस्तन् किद्धातोर्मुट् च। "उपधायां च" इति दीर्घः। "राल्लोपः" इति[5] छलोपः। "हलि च" इति दीर्घः। मूर्तः[6]॥

---

## ॥ ३६३ ॥ अञ्जिघृसिभ्यः क्तः ॥ ३—९० ॥

अक्तं जगत्॥ "घृ क्षरणदीप्त्योः" घृतम्॥ बध्नाति दृष्टिं सितः श्वेतः। निष्ठया सिद्धेऽपि[9] नामत्वादुक्तिः॥ लूसूचितिभ्यश्च भोजः। लुनात्यन्यजन्तून् लूता॥ प्रेरयत्यश्वान् सूतः॥ जानन्त्यनेन चित्तम्॥

---

## ॥ ३६४ ॥ दुतनिभ्यां दीर्घश्च ॥ ३—९१ ॥

---

१. G and GD मर्त्यो.
२. G and GD सारङ्गः.
३. A, GD and P नञ्याप्नोतेरिट् च.
४. G मृतो याचितः. [दीर्घः.
५. A omits "उपधायां च" इति
६. G omits इति.
७. G and GD omit हलि...दीर्घः.
८. G मुहूर्तः, GD and P मूर्तः.
९. G सिद्धोऽपि.

क्तैः स्यात्। गच्छति दूतः ॥ नलोपे कृते दीर्घः। तातः ततवत् ॥ बाहुलकात् षिञः क्तः दीर्घश्च। बीजानि सिनोति सीता ॥

## ॥ ३६५ ॥ जेर्मुट्चोदात्तः ॥ ३—९२ ॥

जेः क्तः तस्योदात्तः मुट् धातोः दीर्घश्च। जयत्युष्णं जीमूतः ॥

## ॥ ३६६ ॥ लोष्टपलितौ ॥ ३—९३ ॥

लूयते खण्ड्यते लोष्टः ॥ फलति विशीर्यतेऽनेन देह इति पलितं जरा ॥ व्रातालातसुतपुतपित्तनिमित्तमुस्तपुस्तरूस्तबिस्तवितस्तादयो भोजोक्ताः। व्रजति व्रातैः[1] ॥ अर्धदग्धत्वेनान्यानुपयुक्तत्वात् न लात्येतत् अलातम्[2][3] ॥ षूङो ह्रस्वः ॥ सुतः ॥ पुतः ॥ स्फिक् ॥ पतन्त्यनेन पित्तम् ॥ "मुस खण्डने" खण्ड्यते वराहैः मुस्ता ॥ पुषेः सत्त्वम्। पुष्यत्यनेन ज्ञानं पुस्तं पुस्तकम् ॥ रूस्तानि वस्त्रदशाः ॥ बिस्यते प्रेर्यते क्रयाद्यर्थं बिस्तम् कर्षपरिमितहेम ॥ वितस्ता नदी ॥ आङ्युक्तेः अयुतम् नियुतम्[4] ॥

## ॥ ३६७ ॥ हृश्याभ्यामितन् ॥ ३—९४ ॥

हरति चित्तं हरितः ॥ व्याप्नोति श्येतः सितः ॥

## ॥ ३६८ ॥ रुहे रश्च लो वा ॥ ३—९५ ॥

वर्णान्तरेभ्य[5] उपरि गच्छति रोहितः लोहितः ॥ भोजेन पिशिपृषिभ्यां किदुक्तः। अंशीकृतत्वात् पिशितम् ॥ पृषितं बिन्दुः ॥

## ॥ ३६९ ॥ श्रुदक्षिस्पृहिभ्य आय्यः ॥ ३—९६ ॥

---

१. G, P क्तश्च.
२. A, GD व्रातम्.
३. G अलातः.
४. G, P omits नियुतम्.
५. G पर्णा-

श्रवाय्यः श्रोता ॥ "दक्ष गतिहिंसनयोः" "दक्ष वृद्धौ शीघ्रार्थे च" सर्वत्र गन्तृत्वात् हिंसकत्वात् वृद्धाङ्गत्वात् शीघ्रगामित्वाद्वा दक्षाय्यः गृध्रः ॥ "अयामन्त" इति णेरय् । स्पृहयाय्यः स्पृहयालुः ॥ "स्पृहिगृहिभ्यः" इति पाठे गृहयाय्यः गृहस्वामी ॥

---

॥ ३७० ॥ **दधिषाय्यः** ॥ ३—९७ ॥

[**दधिषाय्यः**][1] आज्यार्थे निपात्यते ॥

---

॥ ३७१ ॥ **वृञ एण्यः** ॥ ३—९८ ॥

संभज्यते **वरेण्यः** श्रेष्ठः ॥

---

॥ ३७२ ॥ **स्तुवः क्षेय्यश्छन्दसि** ॥ ३—९९ ॥

**स्तुषेय्यः** स्तुत्यः ॥

---

॥ ३७३ ॥ **राजेरन्यः** ॥ ३—१०० ॥

**राजन्यः** क्षत्रियः ॥

---

॥ ३७४ ॥ **अर्तेर्निश्च**[3] ॥ ३—१०१ ॥

न गच्छति अस्मिन्निति **अरण्यम्** ॥

---

॥ ३७५ ॥ **पर्जन्यः** ॥ ३—१०२ ॥

पृणातेरन्यप्रत्ययस्य जुट् । पालयति पूरयति वा **पर्जन्यः** ॥ शूरम्योश्च[4] भोजः । शरण्यः रक्षिता ॥ रमण्या योषित् ॥

---

१. The word within brackets is omitted in the ms.

२. G क्लेय्यः.

३. A, GD and P नित्.

४. A रमोश्च.

॥ ३७६ ॥ वदेरान्यः ॥ ३—१०३ ॥

वदान्यः प्रियवाक् दाता च, दातॄणामपि सम्यग्भाषित्वात्[1] ॥

॥ ३७७ ॥ अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥ ३—१०४ ॥

अमति भक्षयत्यस्मिन्[2] [3]अमत्रम् ॥ गच्छति नक्षत्रम्[4] ॥ यजत्रः यज्वा ॥ वधत्रं आयुधम् ॥ पतत्रम् ॥

॥ ३७८ ॥ गलेरादेश्च[5] कः ॥ ३—१०५ ॥

गलति भुङ्क्ते भर्तुः स्वं कलत्रम् ॥

॥ ३७९ ॥ वृञश्चित् ॥ ३—१०६ ॥

व्रियते वेष्ट्यतेऽनया वरत्रा रज्जुः ॥

॥ ३८० ॥ सुञि विदेः कत्रन्[6] ॥ ३—१०७ ॥

सुविदत्रं धनम् ॥

॥ ३८१ ॥ कृतेर्नुम् च ॥ ३—१०८ ॥

कृन्तत्रं लाङ्गलम् ॥

॥ ३८२ ॥ भृमृदृशियजिपर्विपच्यमिनमि[7]हर्य[8]-
भ्योऽतच् ॥ ३—१०९ ॥

भरतः ॥ मरतः[9] वायुः ॥ दर्शतः दर्शनीयः ॥ यजतः यज्वा ॥

---

१. G and GD भाषितत्वात्.
२. G भाषयति.
३. G न मिलं.
४. G omits नक्षत्रं.
५. G गडे-
६. A कतः.
७. G adds तमि.
८. G हर्येभ्यो.
९. G and P मरुतो.

पर्य्यते पूर्यते वृक्षादिभिः **पर्वतः** ॥ **पचतः** कालः ॥ **अमतः** मृत्युः ॥ **नमतः** कुथभेदः ॥ गच्छन्त्यनेन स्वर्गम्, काम्यते वा देवैः **हर्यतः** यज्ञः ॥ वलेश्च भोजः । वलतं कुसूलम् ॥

---

## ॥ ३८३ ॥ पृषिरञ्जिभ्यां कित् ॥ ३—११० ॥

सिञ्चति रेतस्सेकं करोति **पृषतः** मृगः ॥ रज्यते काङ्क्ष्यते **रजतम्** ॥ सिकेश्च भोजः । सिकता ॥

---

## ॥ ३८४ ॥ खलतः ॥ ३—१११ ॥

**खलतः** दुर्जनार्थोऽयम् ॥

---

## ॥ ३८५ ॥ शीङ्शपिरुगमिवञ्चिजीवि-प्राणिभ्योऽथः ॥ ३—११२ ॥

**शयथः** अजगरः ॥ **शपथः** ॥ **रवथः** शब्दकारः ॥ **गमथः** पन्थाः ॥ **वञ्चथः** कालः ॥ **जीवथः** वायुः ॥ **प्राणथः** बलवान् ॥ वन्दिबन्धि[1]-भ्यां च भोजः । वन्दथः स्तोता ॥ बन्धथः कोकिलः ॥ दृशमिदमिभ्यश्च । दरथः गर्तः ॥ शमथः शान्तिः ॥ दमथः दमः ॥

---

## ॥ ३८६ ॥ उपसर्गे वसेः ॥ ३—११३ ॥

आ वसन्त्यस्मिन् आवसथः गृहम् ॥ उप वसन्त्यस्मिन्[2] देवाः उपवसथः सुत्यापूर्वमहः ॥

---

## ॥ ३८७ ॥ भृञश्चित् ॥ ३—११४ ॥

**भरथः** लोकपालः ॥

---

१. G बन्दि.  २. A and GD अत्र.

॥ ३८८ ॥ रुदिविदिभ्यां कित् ॥ ३—११५ ॥

उवङ् । रुवथः श्वा ॥ विदथः यज्ञो योगी च ॥

---

॥ ३८९ ॥ अत्[1]यमिचमितमिरभि[2]नभि[3]तपिपणि-
पनि[4]भ्योऽसच्[5] ॥ ३—११६ ॥

अतसी तरुः ॥ अमसम् उदकम् ॥ चमसः ॥ तमसा नदी ॥ रभसः[6] "रभेरशब्लिटोः" इतिनुम् बाहुलकान्न ॥ नभसः समुद्रः नभो[7] वा ॥ तपसः[8] सूर्यः ॥ पणसः पण्यम् ॥ स्तूयते भुञ्जानैः पनसः ॥ अ[9]ल्यवरधिचटिभ्यश्च भोजः । शक्त्यर्थस्य वैपरीत्यात् अलसः ॥ अ[10]वसं पाथेयम् ॥ रधसः अन्धकजातिः ॥ चटसः चर्मपुटम् ॥

---

॥ ३९० ॥ वे[11][12]ञस्तुट् ॥ ३—११७ ॥

शोभते वेतसः ॥

---

॥ ३९१ ॥ वयो णित् ॥ ३—११८ ॥

"वय गतौ" । वायसः ॥

---

॥ ३९२ ॥ वाहसः ॥ ३—११९ ॥

न वहति न[13] गच्छति वाहसः अजगरः ॥ "वहियुभ्यां णित्" इत्येके । गोभक्षः किल यावसः । अत्र भोजः तामरसपुत्कसादीन् न्यपातयत् ॥

---

१. G अत्यवि.
२. G adds लभि.
३. G adds पति.
४. G transposes पणि and पनि.
५. G महिभ्यो.
६. GD omits रभसः.
७. G omits नभः.
८. G तपः.
९. G अल्यविरथिधि-
१०. G अवसा.
११. A, GD and P विय-
१२. G omits this sūtra.
१३. GD omits न गच्छति.

॥ ३९३ ॥ दिविसिविभ्यां किञ्च[1] ॥ ३—१२० ॥

दीव्यति व्याप्रियते गच्छति वात्र दिवसः, शोभते वा ॥ सिवसः स एव ॥

---

॥ ३९४ ॥ कृगृशृशलिगर्[2]दिभ्योऽभच् ॥ ३—१२१ ॥

करभः उष्ट्रः ॥ गरभः हिंस्रः ॥ शृणाति[3] शरभः ॥ गच्छति शलभः ॥ गर्दभः ॥

---

॥ ३९५ ॥ ऋषिवृषिभ्यां कित् ॥ ३—१२२ ॥

गच्छति ऋषभः ॥ सदा रेतः सिञ्चति वृषभः ॥

---

॥ ३९६ ॥ रुषेर्नित् लुश्[4] च ॥ ३—१२३ ॥

हिनस्ति लुशभः गन्धहस्ती ॥

---

॥ ३९७ ॥ रासिवल्लिभ्यां च ॥ ३—१२४ ॥

शब्दायते रासभः ॥ संवृणोत्यनिष्टं वल्लभः ॥

---

॥ ३९८ ॥ गलेः[5] कल च ॥ ३—१२५ ॥

जलेन सिञ्चत्यात्मानं कलभः ॥

---

॥ ३९९ ॥ जुविशिभ्यां झच् ॥ ३—१२६ ॥

"झोऽन्तः" जरन्तः महिषः ॥ विश्यते गाह्यते वेशन्तः[6] पल्वलम् ॥ रिवेश्च भोजः । रेवन्तः सूर्यपुत्रः ॥

---

1. G किन्.
2. G adds कलि.
3. GD omits शृणाति.
4. G and P नि लुष् च. GD लश च.
5. G रालेः.
6. G वेधन्तः.

॥ ४०० ॥ रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥ ३—१२७ ॥

आशिषि द्योत्यायां रुहादिभ्यो झच् षित् स्यात् । रोहत्वित्याशास्यमानत्वात् **रोहन्तः** वृक्षः । षित्त्वात् रोहन्ती लता ॥ **नन्दन्तः** सुखी ॥ **जीवन्तः** ऋषिः । जीवन्ती ओषधिः ॥ **प्राणन्तः** वायुः ॥

---

॥ ४०१ ॥ तॄभूव[1]सिवहिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥ ३—१२८ ॥

एभ्यः षित् झच् स्यात् । **तरन्तः** समुद्रः ॥ **भवन्तः** कालः ॥ सुखं वसन्त्यस्मिन् इति **वसन्तः** । निवसन्तः निवासस्थानम् ॥ **वहन्तः** रथः ॥ **भासन्तः** सूर्यः ॥ "अयामन्त" इति णेरयै[2] । **साधयन्तः** भिक्षुः ॥ **गळयन्तः** मेघः ॥ **मण्डयन्तः** अलङ्कर्ता ॥ **जयन्तः** इन्द्रपुत्रः ॥ **नन्दयन्तः** सुखकृत् ॥

---

॥ ४०२ ॥ हन्तेर्हि[3] मुट् च ॥ ३—१२९ ॥

झँचो[4] मुट् च । तुषारेण हन्ति जनान् **हेमन्तः** ॥ दुषेः षुक् च भोजोक्तेः[5] । न दुष्यति दुष्षन्तः[6] ॥

---

॥ ४०३ ॥ सिनोतेरी च ॥ ३—१३० ॥

झीचो[7] मुडीत्वं च । **सीमन्तः** ॥

---

॥ ४०४ ॥ भन्देर्नलोपश्च ॥ ३—१३१ ॥

**भदन्तः** क्षपणः ॥

---

1. G transposes वहि and वसि.
2. G णेरयः.
3. G हन्तेर्मुट् हि च.
4. GD and P omit झचो मुट् च.
5. G -क्तम्.
6. G दुष्यन्तः.
7. G झषो मुट् डित्वं च.

## ॥ ४०५ ॥ ऋच्छेररः ॥ ३—१३२ ॥

**ऋच्छरः** त्वरावान् ॥ "मुदेर्गुक् च" इति भोजः। मोदन्ते योद्धारो अनेन मुद्गरः ॥ "गुरेर्जुक् च गू" इति। गूर्जरो देशः ॥

---

## ॥ ४०६ ॥ अर्तिकमिचमिभ्रमिदेविवासिवाशिभ्यश्चित् ॥ ३—१३३ ॥

अर्यतेऽनेनेति **अररम्** कवाटम् ॥ **कमरः** कामुकः ॥ भक्षयति तृणादि **चमरः** मृगः ॥ **भ्रमरः** ॥ **देवरः** पत्यनुजः ॥ सुखं वासयति जनान् **वासरः** ॥ **वाशरः** अग्निः[2] ॥ भोजस्तु[3] "सुन्दिकन्दिमन्दिमन्थिमञ्जिपञ्जिपिञ्जिचटिकासिकुटिकबिशबिशुदुकदिबदिभ्यो नित्" स्यादित्याह। सुन्दरः ॥ प्रतिध्वनिना सिंहादिशब्दैर्वा रोदितीव कन्दरः ॥ मन्दन्ते मृगादयोऽत्र मन्दरः ॥ क्षोभयति चारुगत्या हृदयं मन्थरः ॥ गौरादि ङीष्, मञ्जरी ॥ पञ्जरः ॥ "पिजि वर्णे" पिञ्जरः पिङ्गः ॥ चटरः मधुकरण्डः ॥ कुत्सितशब्दकृत्वात् कासरः महिषः। बाहुलकात् "गाङ्कुटादि" इति ङित्त्वाभावः ॥ प्रायेणानृजुरन्ध्ररूपत्वात् कोटरम् ॥ स्तूयते कबरः केशः नानावर्णश्च ॥ गच्छति वने शबरः ॥ दवरः गुणः ॥ कदरः सितखदिरः ॥ गौरादित्वात् बदरी ॥ भूयोऽप्याह "कृगृघजझृदबृभृमृभ्यस्सधात्वादिष्टित्" एभ्यः क्रमात् धात्वादिभूतकादिवर्णसहितो रप्रत्ययष्टित् स्यात्। तेन करगरधरेत्यादिप्रत्ययः। कर्करः क्षुद्रात्मा। टित्वात् कर्करी लता ॥ गर्गरः राजर्षिः ॥ घर्घरः घोषः ॥ जर्जरः दीर्णः ॥ झर्झरदर्दरौ वाद्यभेदौ ॥ बर्बरः म्लेच्छजातिः ॥ भर्भरः छद्मवान् ॥ मर्मरः शुष्कपत्रचयः ॥ मर्मरायां दूर्वायां इत्यादौ टित्त्वेऽपि बाहुलकान्न ङीप् ॥ पिठरक्रकरमकरशिखरशेखरडहरकुहरकूर्परशबर-

---

1. G transposes भ्रमि and चमि.
2. G अहिः.
3. G omits भोजस्तु.
4. G पिञ्जि.
5. G कृश्रझृदपभृमृभ्यः.
6. G सत्त्वधात्वामिष्टित्.
7. G धान्तादिभूत-
8. A झर्झरो दर्दरोऽपि.
9. A, GD and P कर्पर-

डमरडामरपामरसगरतेगरतोमराजगरादयोऽप्यरान्ता उक्ताः । क्रकरः तित्तिरिः ॥ डहरं हृत्पद्मम् । दन्त्यादि केचित् पठन्ति ॥ कूर्परः हस्तैकदेशः ॥ कर्परः कपालः ॥ डमरः डामरश्च विशृङ्खलः ॥ तगरः वृक्षः ॥ आद्युक्तेः कैडङ्गरः अम्बुसम् इति ॥

---

## ॥ ४०७ ॥ कुवः क्ररन् ॥ ३—१३४ ॥

कौति **कुररः** पक्षी ॥

---

## ॥ ४०८ ॥ अङ्गिमदिमन्दिभ्य आरन् ॥ ३—१३५ ॥

अङ्गतेः दीप्त्यर्थत्वात् **अङ्गारः** ॥ **मदारः** वराहः रत्नं च ॥ मोदन्ते अनेन **मन्दारः** ॥ अगिकासिभ्यां च भोजः । अगति गतप्रत्यागतैः कुटिलं गच्छति अत्र अङ्गारः[2] ॥ दुर्जलत्वात् कासन्तेऽनेन पीतेन कासारः सरः ॥

---

## ॥ ४०९ ॥ गलेः[3] कट च ॥ ३—१३६ ॥

कटत्यत्र[4] **कटारः** जलपात्रम् । “ कडे च ” इति पाठे कडारः पिङ्गलः ॥

---

## ॥ ४१० ॥ शृङ्गारभृङ्गारौ ॥ ३—१३७ ॥

शृङ्गति व्याप्नोति सामाजिकहृदयं **शृङ्गारः** ॥ भ्रियते जलमस्मिन् **भृङ्गारः** ॥

---

## ॥ ४११ ॥ कञ्जिमृजिभ्यां चित् ॥ ३—१३८ ॥

**कञ्जारः** कुसूलः ॥ मृजेर्वृद्धिः । जिह्वया मार्ष्टि सर्वपात्राणि **मार्जारः** । आखुभ्यो गृहं मार्ष्टि शोधयति वा ॥ “ कृञो मुट् च ” इति भोजः । कर्मारः लोहकारः ॥

---

1. A omits the word.
2. G and P भङ्गारं.
3. A and P गडेः.
4. GD adds जलं

॥ ४१२ ॥ कमेरुच्चोपधायाः ॥ ३—१३९ ॥

काम्यते काङ्क्ष्यते कुमारः ॥

---

॥ ४१३ ॥ तुषारादयश्च ॥ ३—१४० ॥

अत्र भोजः—तुषिकुटिभ्यामारन् । तुष्यन्तेऽनेन शीतार्थिनः तुषारः ॥ कुठारः ॥ कल्हारकान्तारकेदारकोविदारकर्बुदारकाञ्चनारादयः । कैलन्तेऽत्र भृङ्गाः कल्हारः ॥ काम्यते [3]मृगैः कान्तारम् ॥ क्रियते जलैः केदारः ॥ अन्त्यास्त्रयो वृक्षभेदाः ॥ आद्युक्तेः दीनारः काञ्चनम् । मसारः इन्द्रनीलः इति ॥

---

॥ ४१४ ॥ सर्तेरपः षुक् च ॥ ३—१४१ ॥

व्याप्नोति व्यञ्जनेषु सर्षपः ॥

---

॥ ४१५ ॥ उषिकुटिदलिकचिखजिभ्यः[4] कपन् ॥ ३—१४२ ॥

उषपः सूर्यः ॥ कुटपः प्रस्थचतुर्थभागः । "कुडुप इत्यव्युत्पन्नमस्ति" इति हरः ॥ दलपः शरः ॥ कचपः शूकः ॥ खजपः घृतमन्थः ॥ कुषिकलिभ्यश्च भोजः । कुषपः विन्ध्यः[6] ॥ कलपः शाकपर्णः ॥

---

॥ ४१६ ॥ कणेः संप्रसारणं च ॥ ३—१४३ ॥

पूर्वमकणत् कुणपः शवम् ॥

---

॥ ४१७ ॥ [7]कवश्चाकवर्मणस्य ॥ ३—१४४ ॥

तन्मते कुणवः शवम् ॥

---

१. G रि-
२. G कलन्ति.
३. A भृङ्गैः.
४. G खचिभ्यः P खञ्जिभ्यः.
५. G इत्यप्यु-
६. G विन्ध्यः.
७. G कुप-

॥ ४१८ ॥ विटपविष्टपविशिपोलपाः ॥ ३—१४५ ॥

"[१]विट शब्दे" ध्वनन्त्यत्र खगा विटपः ॥ "विष्लृ व्याप्तौ" [२]विष्टपम् ॥ विशिपः गृहम् ॥ उच्यति सङ्घातीभवति उलपः तृणम् ॥ कुतपचातपर्शिशपादयश्च भोजोक्ताः । कुतपः छागलोम ॥ चातपः मुनिः ॥

---

॥ ४१९ ॥ वृतेस्तिकन् ॥ ३—१४६ ॥

वर्त्तिका चित्रोपकरणम् ॥

---

॥ ४२० ॥ कृतिभिदिलतिभ्यः कित् ॥ ३—१४७ ॥

कृत्तिका ॥ [३]भित्तिका शतावरी [४]वज्रं च ॥ लतिः सौत्रः । लत्तिका गोधा ॥ पुतेश्च भोजः । पुत्तिका मधुमक्षिका ॥

---

॥ ४२१ ॥ इष्यशिभ्यां तकन् ॥ ३—१४८ ॥

कित् स्यात् । इष्यते चयनार्थम् इष्टका । अश्नन्ति[५] पितरोऽत्र इति अष्टका ॥ "मियो ह्रे च" इति भोजः[६] । बिभीतकः ॥

---

॥ ४२२ ॥ इणस्तशंस्तशसुनौ ॥ ३—१४९ ॥

एतशः इन्द्रः ॥ एतशसु ब्राह्मणः ॥

---

॥ ४२३ ॥ विपतिभ्यां तनन् ॥ ३—१५० ॥

वियन्त्यश्नन्त्यनेन वेतनम् ॥ पत्यते गम्यते जनैः पत्तनम् ॥ "[७]पॄपूभ्यां कित्" इति भोजः । प्रीणयति नृपं [८]पृतना ॥ पूतना ॥

---

१. G omits root and meaning.
२. G adds व्याप्तत्वात्.
३. G omits this word.
४. G वज्रश्च.
५. G अश्नुवन्ति.
६. G omits भोजः.......जनैः.
७. G omits पॄ.
८. G omits पृतना.

॥ ४२४ ॥ दृद्लिभ्यां भः ॥ ३—१५१ ॥

दृणाति पाणिं[1] दर्भः ॥ दल्भः वल्कलम् ॥

---

॥ ४२५ ॥ अर्तिगृभ्यां भन् ॥ ३—१५२ ॥

अर्यते रम्यत्वात् [2]अर्भः बालः ॥ गीर्यते अन्तर्ध्रियते गर्भः ॥

---

॥ ४२६ ॥ इणः कित् ॥ ३—१५३ ॥

एति [3]मन्दं मन्दं इभः ॥

---

॥ ४२७ ॥ असिसञ्जिभ्यां क्थिन् ॥ ३—१५४ ॥

अशुद्धत्वात् अस्यते अस्थि[4] ॥ नलोपः । अन्योऽन्यं सजति सक्थि ऊरू ॥ अजेश्च भोजः । वीभावः । गम्यतेऽनया वीथिः ॥

---

॥ ४२८ ॥ प्लुषिशुषिकुषिभ्यः क्सिः ॥ ३—१५५ ॥

"षढोः कः" प्लुक्षिः अग्निः ॥ शुक्षिः वायुः ॥ कुक्षिः ॥

---

॥ ४२९ ॥ अशेर्नित् ॥ ३—१५६ ॥

अश्नुते विषयान् अक्षि ॥

---

॥ ४३० ॥ इष्यशिभ्यां क्सुः ॥ ३—१५७ ॥

इष्यते भक्षणार्थं इक्षुः ॥ "छशां षः" "षढोः कः" अक्षुः आदित्यः ॥

---

॥ ४३१ ॥ अवितृस्तृतन्त्रिभ्य ईः ॥ ३—१५८ ॥

अवत्यात्मानं अवीः पुष्पिता स्त्री ॥ तरीः नौः ॥ स्तरीः निवृत्तप्रसवा ॥

---

1. G पाणिभिः.
2. G अर्भको.
3. A and GD omit मन्दं.
4. G अस्थिन्.

धार्यते वीणा तन्त्रीः वीणागुणः ॥ तन्द्रेश्च भोजः । तन्द्रीः । माधवस्तु इकारान्तमुक्त्वा "कृदिकारात्" इति वा[1] ङीष् इत्याह । तन्द्रिः तन्द्री[2] ॥

---

॥ ४३२ ॥ यापोः किद्द्वे च ॥ ३—१५९ ॥

कित्त्वादाल्लोपः । ययीः दीर्घयष्टिः ॥ पपीः दन्ती ॥

---

॥ ४३३ ॥ लक्षेर्मुट् च ॥ ३—१६० ॥

लक्षयति पश्यति सुकृतिनं लक्ष्मीः, अङ्कयति हरेः गात्रं वा ॥

इत्युणादिवृत्तौ पञ्चपाद्यां प्रक्रियासर्वस्वे

॥ तृतीयः पादः ॥



---

1. G omits वा.

2. G omits this word.

## ॥ अथ चतुर्थः पादः ॥

---

### ॥ ४३४ ॥ वातप्रमीः ॥ ४—१ ॥

[वातप्रमीः] मृगविशेषः । "देवयजीः" इत्यपि कौमुदी[1] । देवान् यजतीत्यर्थे बाहुलकादीप्रत्ययः प्रसादे उक्तः । बाहुलकादिप्रत्ययादिदन्त एवायमिति शङ्करः ॥

---

### ॥४३५॥ अर्तितन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः अत्निच्-यतुजलिजिष्ठुजिष्णु[2]जिशन्स्यनिथिनुल्यषासानुकः ॥ ४—२ ॥

अर्तेरत्निच् । अर्यते मीयतेऽनेनेति अरत्निः ॥ तनेर्यतुच् । तन्यतुः सूर्यः ॥ अञ्जेरलिच् । [3]अज्यते जलेनेति अञ्जलिः ॥ पाटेश्च भोजः । पाटलिः वृक्षः ॥ वनेरिष्ठुच् । वनिष्ठुः मांसभेदः ॥ अञ्जेरिष्णुच् । अञ्जिष्णुः घृतम्[4] ॥ अर्पेरिशन् । अर्पिशः हस्ती ॥ मदेः स्यन् । चर्त्वम् । माद्यति जले मत्स्यः ॥ अतेरिथिन् । सततं गच्छतीति अतिथिः ॥ अङ्गेरुलिः । अङ्गति चलति अङ्गुलिः ॥ कोरषः । कवषः मुनिः ॥ योरसन् । युवन्ति पशवोऽत्र यवसः ॥ कृशेरानुक् । तनूकरोत्याधारं कृशानुः ॥

---

### ॥ ४३६ ॥ श्रः करन् ॥ ४—३ ॥

शृणाति पादं रसान्तरं वा शर्करा ॥ वृकिभ्यां च भोजः । वर्करः[5] छागशिशुः ॥ केकरः वक्रदृष्टिः ॥

---

### ॥ ४३७ ॥ पुषः कित् ॥ ४—४ ॥

---

1. GD and P कौमुद्यां.
2. G omits -जिष्णु-
3. G omits अज्यते जलेनेति.
4. G घटम्.
5. GD बर्करः.

पुष्यति[1] जले पुष्करः पद्मम् । पुष्णाति धान्यादिकमिति जलादिकमपि[2] । व्याप्नोतीति अम्बरं च । पुष्यति शब्दोऽत्रेति[3] वाद्यमुखं च ।

"कराग्रं करिणां व्योम कुशेशयमसेः फलम् ।
आननं चानकादीनां ब्रवते पुष्करं बुधाः ॥"

"सुपुषिभ्यां कित्" इति भोजः । बहु सूते सूकरः ॥

## ॥ ४३८ ॥ [4]कलच् च ॥ ४—५ ॥

पुषेः कलच् कित्स्यात् । पुष्यति पुष्कलम् ॥ "वलेः कलच्" इति भोजः । संवृणोत्यङ्गं वल्कलम् ॥

## ॥ ४३९ ॥ गमेरिनिः ॥ ४—६ ॥

गमी गमिष्यन्नित्यर्थः ॥

## ॥ ४४० ॥ आङि णित् ॥ ४—७ ॥

आगामी ॥ "आङि च णित्" इति भोजः । तेन केवलादपि गामी ॥

## ॥ ४४१ ॥ भुवश्च ॥ ४—८ ॥

भावी ॥

## ॥ ४४२ ॥ प्रे स्थः ॥ ४—९ ॥

प्रस्थायी ॥ "यातेः प्रतौ च" इति भोजः । प्रतियायी प्रयायी । "बुधेश्च" यातिवत् स्यात् । प्रबोधी प्रतिबोधी । एषाम् "भविष्यति गम्यादयः" इति भविष्यदर्थता ॥

## ॥ ४४३ ॥ परमे कित् ॥ ४—१० ॥

---

१. GD omits पुष्यति......पद्मम्. जले पुष्करं वर्त्म.

२. G and P जलमपि. GD omits this word, but adds पुष्करं जलं पुष्यति

३. A शब्दान.

४. G कलच्. GD कलश्च.

परमे शब्दे पूर्वस्य स्थाधातोः किदिनिर्भवेत्। आल्लोपात् परमेष्ठी इति। "स्थास्थिन्स्थूणाम्" इति इह षः।

स्थास्थिन्नितीह स्थाशब्दः स्थाधातोः क्विपि वर्णितः।
शिरिष्ठाश्च रतेष्ठा इत्यलुक् तत्पुरुषे कृति ॥

---

## ॥ ४४४ ॥ मथेः ॥ ४—११ ॥

मथेरिनिः स्यात्। मिथिन्शब्दो मन्थनार्थः ॥

---

## ॥ ४४५ ॥ पतेः स्थ च ॥ ४—१२ ॥

पतन्ति गच्छन्त्यत्र पन्थाः ॥

---

## ॥ ४४६ ॥ खजेराकः ॥ ४—१३ ॥

खजाकः मन्थः ॥

---

## ॥ ४४७ ॥ बलाकादयश्च ॥ ४—१४ ॥

वलति गच्छति बलाका ॥ मनाका कामिनी ॥ नभाकः ऋषिः ॥ पवाकः पूतः ॥ प्लवाकः प्लवः ॥ लवाकः कर्मकारः ॥ नवाकं नवम् ॥

---

## ॥ ४४८ ॥ शलिपटिपतिभ्यो नित् ॥ ४—१५ ॥

"शल गतौ" सूक्ष्मस्थानेऽपि गच्छति शलाका ॥ गच्छति गगनमिति पटाकापताके समार्थे ॥

---

## ॥ ४४९ ॥ पिनाकादयश्च ॥ ४—१६ ॥

"पिनाकपिण्याकश्यामाकपुलाकवार्ताकवृन्ताकज्योन्ताकादयः" इति भोजः। पिनष्टयरीन् पिनाकः ॥ गच्छत्युदरं श्यामाकः ॥ "पुल महत्त्वे"

---

१. G omits स्थाधातोः.....स्था-शब्दः.
२. GD omits आल्लोपात्.
३. GD पण्डितः.
४. GD गिर-
५. GD स्थः.
६. G and GD omit वृन्ताक.

वैपरीत्यात् पुलाकः तुच्छधान्यम् ॥ वार्ताकवृन्ताकौ बृहतीभेदौ ॥ ज्योन्ताकं स्वेदसद्म ॥ आग्रुक्तेः[१] गुपाकः क्रमुकः । गुवाक इति वकार इत्यन्ये ॥ स्योनाकः तरुः ॥ पराकः व्रतभेदः ॥ भवाकः कपोतः ॥ शुभाकः शोभनः ॥

तड आघात इत्यस्मात् तडाकोऽत्रेति वृत्तिकृत् ।
तडाकं मन्यते भोजः तडेरागजितीरयन् ॥

[४]टीकासर्वस्वकारस्तु तटाकमपि रक्षितुम् ।
आके कृते तडेरेव बाहुल्याट्टत्वमिच्छति ॥

---

## ॥ ४५० ॥ कषिदूषिभ्यामीकन् ॥ ४—१७ ॥

कषीका मक्षिका ॥ दूषीका नेत्रमलम् ॥ माधवेन तु इकन्नुक्त्या दूषिका साधिता । तस्योत्तरत्रानुवृत्तिर्न विघ्नः ॥[५]

---

## ॥ ४५१ ॥ चङ्कण्यतेः किङ्किण च ॥ ४—१८ ॥

यङन्तात् कणेरीकन् किङ्किणादेशश्च । **किङ्किणीका** क्षुद्रघण्टिका । किङ्किणी तु पृषोदरादित्वात् वार्धूषिवत् ॥

---

## ॥ ४५२ ॥ शॄपॄवृञां द्वे रुक् चाभ्यासस्य ॥ ४—१९ ॥

उरदत्वे[१] हलादिशेषे च कृते रुक् । **शर्शरीकः** अश्वः ॥ **पर्परीकः** भक्षोऽग्निश्च ॥ **वर्वरीकः** केशसङ्घातो गजश्च ॥

---

## ॥ ४५३ ॥ पर्फरीकादयश्च ॥ ४—२० ॥

**पर्फरीकः** मृदुः ॥ दर्दरीकः इन्द्रः ॥ मर्मरीकः शुष्कपर्णम् ॥ कर्करीका जलपात्रम् ॥ मृद्वीकतिन्तिडीकबाह्लीकवल्मीककल्मलीकपुण्डरीकचञ्चरीकसमीकपूतीकादयश्च भोजोक्ताः । आशु मृद्यते मृद्वीका । मृद्वीशब्दात् कनि ह्रस्वे

---

१. GD adds ग्रुपाकः.
२. GD omits क्रमुकः । गुवाकः.
३. G पत्रभेदः.
४. G omits this verse.
५. G adds शृण्वुल्यैवैतत्. A and P add इति ण्वुल्यैवैतत्.

मृद्वीकेति माधवः ॥ तिन्तिडीकः तरुः ॥ बाह्लीकः राजा ॥ वलन्ते स्त्रियोऽत्र वल्मीकः ॥ कलते ध्वनति कल्मलीका ज्वाला ॥ "पुडि खण्डने" खण्ड्यते पुष्पार्थिभिः पुण्डरीकम् ॥ चञ्चति भ्रमति चञ्चरीकः भृङ्गः । रलयोरैक्यात् चञ्चलीकः ॥ पृथक् प्रतीयते प्रतीकः अङ्गम् ॥ [2]संयन्त्यत्र समीकं युद्धम् ॥ पूयते दशापवित्रेण पूतीकः सोमप्रतिनिधिः लता ॥ आद्युक्तः तिन्त्रिणीकः झर्झरीकः । अर्थो मृग्यः ॥

## ॥ ४५४ ॥ अनिहृशिभ्यां किच्च ॥ ४—२१ ॥

ईकन् स्यात् । जीवन्त्यनेन नृपाः अनीकं सेना ॥ हृशीकं रम्यम् ॥

## ॥ ४५५ ॥ ऋचेश्च ॥ ४—२२ ॥

ऋचीकः ऋषिः । ऋजेरिति पाठात् ऋजीक इत्यन्ये ॥

## ॥ ४५६ ॥ ईषेर्ह्रस्वश्च ॥ ४—२३ ॥

इषीका तृणभेदः ॥

## ॥ ४५७ ॥ सर्तेर्नुं च ॥ ४—२४ ॥

सृणीकः अग्निः ॥

## ॥ ४५८ ॥ मृडेः कीकन्ककनौ ॥ ४—२५ ॥

मृडीकः सुखकृत् । मृडकः सुखी ॥

## ॥ ४५९ ॥ अलीकादयश्च ॥ ४—२६ ॥

अल्यते वार्यत इति अलीकं अप्रियम् असत्यं च । भूष्यत इति ललाटं च ॥ आद्युक्तेः कणीकं निमीलनम् ॥ मनीकं भाजनम् ॥ अणीकः सूक्ष्मः[3] ।

---

1. GD राजा. युद्धम् before पृथक् प्रतीयते.
2. A,GD and P read सं......
3. G सूर्यः.

बलीकः बलवान् ॥ हृषिवलिस्यमिभ्यश्च किकैकन् भोजोक्तः[1] । हृष्यति विषयैः[2] हृषीकम्[3] इन्द्रियम् ॥ संवृणोति वलीकं वेश्मप्रान्तः ॥ स्यमीकं जलम् ॥

---

## ॥ ४६० ॥ कॄतॄभ्यामीषन् ॥ ४—२७ ॥

कीर्यते करीषम् ॥ तरीषं[4] प्लवः ॥

---

## ॥ ४६१ ॥ शॄपॄभ्यां कित् ॥ ४—२८ ॥

"ॠत इत्" शीर्यते चूर्ण्यते स्नानीयार्थं शिरीषः ॥ "उदोष्ठ्यपूर्वस्य" पूर्यतेऽन्तः पुरीषम् ॥

---

## ॥ ४६२ ॥ अर्जेः ऋज[5] च ॥ ४—२९ ॥

अर्जितोऽस्माद्रस इति ऋजीषं पिष्टम् ॥

---

## ॥ ४६३ ॥ अम्बरीषश्च ॥ ४—३० ॥

अम्बते शीशब्दं करोतीति अम्बरीषः भ्राष्ट्रः । शब्द्यते जनैः इति राजा च ॥ "उषेर्नक् च" इति भोजः । ओषति दीप्यते शोभत इति उष्णीषम् ॥

---

## ॥ ४६४ ॥ कॄपॄशॄगॄकटिपटिशौटिभ्य[6] ईरन् ॥ ४—३१ ॥

कीर्यते क्रमात् विस्तीर्यते करीरं वंशाङ्कुरम् ॥ परीरं फलम् ॥ शीर्यते शरीरम् ॥ [7]गरीरः पर्वतः ॥ आव्रियते कटीरं कटी ॥ गम्यते जनैः पटीरः ॥ शौटीरः गर्ववान् ॥ मञ्जिकुटिपूङ्भ्यश्च भोजः । मञ्जीरम् । बाहुलकात् ईत्वम् ॥ कोटीरः मौलिः ॥ पवीरं बीजावपनम्[8] ॥

---

1. G भोजः कीकन्.
2. GD omits विषयैः.
3. G हृषैः.
4. G omits this word.
5. P adds चित्.
6. G कॄशॄपॄकटि-
   GD कॄगॄघॄ-
7. GD omits this word.
8. G बीजवापनं.

॥ ४६५ ॥ वशेः कित् ॥ ४—३२ ॥

कित्त्वादुत्वम् । काम्यते **उशीरम्** ॥ कुलेश्च भोजः । संघातत्वेन जायते कुलीरः ॥

---

॥ ४६६ ॥ कशेर्मुट् च ॥ ४—३३ ॥

गच्छन्त्यत्र **कश्मीरः** देशः ॥

---

॥ ४६७ ॥ कृञ उच्च ॥ ४—३४ ॥

**कुरीरं** मैथुनम् ॥

---

॥ ४६८ ॥ घसेः किच्च[1] ॥ ४—३५ ॥

घसेरीरः[2] किच्च । पिच्च स्यात् । कित्त्वात् "गमहन" इत्युपधालोपः । षत्वचर्त्वे । अद्यते **क्षीरम्** ॥

---

॥ ४६९ ॥ गभीरगम्भीरौ ॥ ४—३६ ॥

कृच्छ्रेण गाह्यते **गभीरः** ॥ **गम्भीरः** ॥ डिण्डीरवानीराभीरकुम्भीरकीर-जम्बीरकिर्मीरादयश्च भोजोक्ताः । जले डयते गच्छति डिण्डीरः फेनः ॥ वन्यते सेव्यते[3] भृङ्गादिभिः वानीरः वेतसः ॥ आप्यते गव्यार्थिभिः आभीरः ॥ कुम्भि-र्धारणार्थः । धारयन् गच्छति जन्तून् कुम्भीरः नक्रः ॥ "कै शब्दे" कीरः ॥ जम्यते भक्ष्यते जम्बीरः ॥ कीर्यते[4] नाना भवति किर्मीरः नानावर्णः ॥ आद्युक्तेः तूण्यते पूर्यते शरैः तूणीरः ॥ "नासृ शब्दे" ध्वनति नासीरम् ॥ करेण वीयते प्राप्यते करवीरम् ॥

---

॥ ४७० ॥ विसा विहा ॥ ४—३७ ॥

विसा विसखण्डः ॥ विहा विरागः । एते अव्यये इति तद्वृत्तिः ॥

---

1. P चिच. GD चिश्च.
2. G omits घसे......स्यात्.
3. G omits this word.
4. GD omits this word.
5. G omits this word.

॥ ४७१ ॥ पच एलिमच् ॥ ४—३८ ॥

**पचेलिमः** माषः ॥

---

॥ ४७२ ॥ भिदेः किच्च ॥ ४—३९ ॥

**भिदेलिमं** काष्ठम् । अस्य चित्त्वात् केलिमरो भेदः ॥

---

॥ ४७३ ॥ शीङ्स्थुग्लग्वालन्वलञः ॥ ४—४० ॥

शेरतेऽनेन पीतेन **शीथुः** "शीङो[1] धुक्" इति पाठे शीधुः ॥ ह्यस्त्वात् परहृदयेषु शेते **शीलम्** ॥ [2]शेते जले **शैवालं शैवलं** च । वालन्प्रत्ययेन शैवालमित्यन्ये ॥

---

॥ ४७४ ॥ मृकणिभ्यामूकोकणौ ॥ ४—४१ ॥

**मरूकः** मयूरः ॥ **काणूकः** श्रेष्ठः ॥

---

॥ ४७५ ॥ वल्लेरूकः ॥ ४—४२ ॥

**वल्लूकः** पक्षी । वल्लूक इति क्वचिन्निपात्यते । तदुत्पलनाम ॥

---

॥ ४७६ ॥ उलूकादयश्च ॥ ४—४३ ॥

उच्चैर्लत्वम् । समवैति सदा स्त्रिया इति **उलूकः** । अत्र भोजः— "कणिजलिवलिबन्धिभल्लिभ्य ऊकः" कणूकः धान्यस्तोकः ॥ अतितीक्ष्णत्वात् जलूकः ॥ बध्यते स्रजि बन्धूकः ॥ "भल्ल परिभाषणे" शब्दं करोति भल्लूकः कपिः ॥ [3]मधूकोरुबूकशम्बूकवरूकादयः ॥ उरुबूकः हिरण्यम् ॥ शम्बूकः क्षुद्रशङ्खः ॥ वरूकः तृणभेदः ॥ आद्युक्तेः मलूकः क्रिमिजातिः इति ॥

---

॥ ४७७ ॥ शलिमण्डिभ्यामूकण् ॥ ४—४४ ॥

---

१. G omits शीङः.
२. G omits शेते जले.
३. P adds भल्लि.

शल्यते जलमग्नत्वात् कृच्छ्रेण प्राप्यते शालूकम् उत्पलादिकन्दम् ॥ मण्ड्यते रेखाभिः मण्डूकः ॥

---

॥ ४७८ ॥ नियो मिः ॥ ४—४५ ॥

नीयते रथोऽनया नेमिः ॥

---

॥ ४७९ ॥ अर्तेरूच्च ॥ ४—४६ ॥

रपर ऊः । तटं गच्छति ऊर्मिः ॥

---

॥ ४८० ॥ अशेरश च ॥ ४—४७ ॥

अश्नुते व्याप्नोति रश्मिः ॥

---

॥ ४८१ ॥ भुवः कित् ॥ ४—४८ ॥

भवन्त्यस्यां भूमिः ॥

---

॥ ४८२ ॥ दल्मिः ॥ ४—४९ ॥

दलयति भूमिमन्तः[1] दल्मिः शङ्कुः ॥

---

॥ ४८३ ॥ वीज्यात्वरिभ्यो निः ॥ ४—५० ॥

बाहुलकात् णत्वम् । गच्छति वेणिः प्रवाहः, कान्तिमत्वात् केशश्च ॥ ज्यानिः ॥ अनुनासिके परे "ज्वरत्वर" इत्यूठ् । तूर्णिः आदित्यः ॥

---

॥ ४८४ ॥ सृवृषिभ्यां कित् ॥ ४—५१ ॥

सरत्यनया गजः सृणिः अङ्कुशः ॥ वर्षत्यभीष्टं वृष्णिः ॥ धोश्च भोजः । कम्पमाना गच्छति धुनिः नदी ॥

---

॥ ४८५ ॥ अङ्गेर्नलोपश्च ॥ ४—५२ ॥

देवानां पुरस्तात् अङ्गति अग्निः ॥

---

1. G omits भूमिमन्तः.

॥ ४८६ ॥ वह्निश्रिश्रुयुग्लाहात्वरिभ्यो नित् ॥ ४—५३ ॥

वहति हविः वह्निः ॥ श्रयन्त्येनां श्रेणिः ॥ श्रूयते न तु दृश्यते वस्त्रच्छन्नत्वात् श्रोणिः ॥ युवन्ति संगच्छन्तेऽत्र योनिः ॥ [1]ग्लानिः ॥ हानिः ॥ तूर्णिः ॥ नित् स्वरार्थम् । क्षोश्च भोजः । क्षोणिः ॥ "शाशीङो ह्रस्वश्च" इति च । तनूकरोति सुखं शनिः ॥ शिनिः यादवः ॥

---

॥ ४८७ ॥ घृणिपृश्निपार्ष्णि[2]भूर्णिचूर्णि ॥ ४—५४ ॥

"घृ क्षरणदीप्त्योः" दीप्यते घृणिः ॥ पृच्छयते समूहगतः पृश्निः अल्पतनुः ॥ पारयति कर्मसु पार्ष्णिः ॥ भूर्णिः धरणिः ॥ चूर्णिः ग्रन्थः ॥

---

॥ ४८८ ॥ पॄदॄभ्यां विन् ॥ ४—५५ ॥

पर्विः शकटम् ॥ दर्विः प्राङ्निपातनात् विफलम् ॥

---

॥ ४८९ ॥ जॄशॄस्तॄजागृभ्यः क्विन् ॥ ४—५६ ॥

"ॠत इत्" "हलि च"। जीर्विः वृद्धः ॥ शीर्विः हिंस्रः ॥ स्तीर्विः रुचिरः ॥ "अविचिण्णल्ङित्सु" इति गुणाभावः । जागृविः विनिद्रः ॥

---

॥ ४९० ॥ दिवो द्वे दीर्घश्चाभ्यासस्य ॥ ४—५७ ॥

दीदिविः स्वर्गः अन्नं च ॥

---

॥ ४९१ ॥ कृविघृष्विछविस्थविदिवि[3]किकिदीवि ॥ ४—५८ ॥

कृविः तन्तुवायः ॥ घृष्विः वराहः । "वराहः सूकरो घृष्विः इति पाठः" इति वृत्तौ ॥ छिनत्ति तिमिरं छविः ॥ स्थविः तुन्नवायः ॥ दिविः धर्मशीलः । दविरित्यन्ये ॥ किकि इत्युक्त्वा क्रीडति गच्छति [4]वा किकिदीविः पक्षी ॥ अटविः शिबिश्च भोजोक्तौ ॥

---

१. G omits ग्लानिः.
२. G -चूर्णिभूर्णि.
३. G omits -दिवि-
४. G omits वा.

॥ ४९२ ॥ पातेर्डतिः ॥ ४—५९ ॥

पतिः ॥

॥ ४९३ ॥ शकेः ऋतिन् ॥ ४—६० ॥

इनावितौ । शक्नोत्यनेन देहः शकृत् ॥ "यजेः कश्च" इति भोजः । यकृत् मांसभेदः ॥

॥ ४९४ ॥ अमेरतिः ॥ ४—६१ ॥

अमतिः मार्गः ॥ योः कित् भोजोक्तः[2] । यौति पुंसा युवतिः स्त्रीमात्रम् ॥

॥ ४९५ ॥ वहिवस्यर्तिभ्यश्चित् ॥ ४—६२ ॥

वंहतिः गौः[1] ॥ वसतिः ॥ अरतिः क्रोधः ॥ खलेश्च भोजः । खलतिः गतकेशः ॥

॥ ४९६ ॥ अञ्चेः को वा ॥ ४—६३ ॥

अङ्कतिः वायुः ॥ अञ्चतिः अग्निः ॥

॥ ४९७ ॥ हन्तेरं ह च ॥ ४—६४ ॥

अंहतिः मृगः ॥ "वृञो व्रत च" इति भोजः । आवृणोति भुवं व्रततिः लता ॥

॥ ४९८ ॥ रमेर्नित् ॥ ४—६५ ॥

रमतिः स्वर्गः ॥

॥ ४९९ ॥ सूङः क्रिः ॥ ४—६६ ॥

सूते वाचः सूरिः ॥

॥ ५०० ॥ अदिशदिभूशुभिभ्यः क्रिन् ॥ ४—६७ ॥

---

1. G omits वहतिः गौः.   2. G भोजोक्ताः.

अदन्ति मृगादयोऽत्रेति अद्रिः ॥ शद्रिः हस्ती ॥ भूरिः ॥ शुभिः ब्रह्मा ॥

---

॥ ५०१ ॥ वङ्क्र्यादयश्च ॥ ४—६८ ॥

"वकि कौटिल्ये" वङ्क्रिः पार्श्वास्थि ॥ अङ्घति गच्छति अङ्घ्रिः ॥ अभ्रिः खननशङ्कुः ॥ विश्रिः मृत्युः ॥ कुद्रिः समुद्रः ॥

---

॥ ५०२ ॥ राशदिभ्यां त्रिप् ॥ ४—६९ ॥

राति सुखं भयं वा रात्रिः ॥ शत्रिः गजः ॥

---

॥ ५०३ ॥ अदेस्त्रिन् ॥ ४—७० ॥

फलाद्यत्तीति अत्रिः ॥

---

॥ ५०४ ॥ पतेरत्रिन् ॥ ४—७१ ॥

पतत्रिः पक्षी ॥

---

॥ ५०५ ॥ मृकणिभ्यामीचिः ॥ ४—७२ ॥

तापान्म्रियन्तेऽत्र मरीचिः ॥ कणीचिः लता ॥ अविदधिभ्यां च भोजः । अवीचिः नरकभेदः ॥ दधीचिः ऋषिः ॥

---

॥ ५०६ ॥ वेञो डिच्च ॥ ४—७३ ॥

तन्तुवानवत् सन्ततो भवति वीचिः ॥

---

॥ ५०७ ॥ श्वयतेश्चित् ॥ ४—७४ ॥

श्वयीचिः चन्द्रः ॥

---

॥ ५०८ ॥ ऋहनिभ्यामूषन् ॥ ४—७५ ॥

अरुषः व्रणः ॥ हनुषः राक्षसः ॥

॥ ५०९ ॥ पुरः कुषन् ॥ ४—७६ ॥

पॄधातोः कुषन्। "उदोष्ठ्यपूर्वस्य" देहं विश्वं वा पृणाति पालयति पूरयति पूरुषः ॥[1]

॥ ५१० ॥ विदिपुरोश्च ॥ ४—७७ ॥

विदुषः विद्वान् ॥ पुरुषः ॥

॥ ५११ ॥ पॄकलिभ्यामुषन् ॥ ४—७८ ॥

प्रीतौ वैपरीत्यात् परुषम् ॥ कल्यते बध्यते पङ्कैः कलुषम् ॥ कल्पि-हपिभ्यां च भोजः। कल्पुषः क्रियानुगुणः ॥ हपुषा ओषधिः ॥

॥ ५१२ ॥ नहिकलिहनिलसिभ्य उषच् ॥ ४—७९ ॥

नहुषः ॥ कलुषहनुषौ स्वैरान्तरार्थमुक्तौ[2] ॥ लसुषः लसन् ॥

॥ ५१३ ॥ [3]पीयेरूषन् ॥ ४—८० ॥

पीयतिः सौत्रः पानार्थः। पीयूषम् ॥

॥ ५१४ ॥ मूज्योर्लोपश्च ॥ ४—८१ ॥

अनयोरूषन् अन्त्यलोपश्च। मूषा लोहद्रावण[4]पात्रम् ॥ जूषः पेय-विशेषः ॥

॥ ५१५ ॥ मस्जेर्नुं च ॥ ४—८२ ॥

स्यात्। पूर्वं नुमि कृते सस्य जश्त्वचुत्वे। "झरो झरि"। मज्जन्त्यन्तर्भवन्त्यत्र वस्तूनि मञ्जूषा ॥

॥ ५१६ ॥ अङ्गूषः ॥ ४—८३ ॥

---

१. G omits पुरुषः.

२. G स्वरार्थ.

३. G पीयतेरुषं.

४. G द्रोहण.

एष बाणार्थः गजार्थश्च । जॄपॄकॄहनिगण्डिभ्योऽपि ऊषन् भोजक्तः । जरूषः सूर्यः ॥ परूषः वृक्षः ॥ करूषं जनपदः[1] ॥ हनूषः राक्षसः ॥ गण्डूषः ॥ "यूषशूषार्कलूषकारूषकोरदूषाटरूषशैलूषादयः" इति च । यूषः पेयभेदः ॥ शूषः बलम् ॥ अर्कलूषः ऋषिः ॥ कारूषः जनपदः ॥ कोरदूषः आटरूषश्च उद्भिद्भेदौ । आद्युक्तेः प्रत्यूषादि ॥

---

## ॥ ५१७ ॥ अर्तेररुः ॥ ४—८४ ॥

अररुः दैत्यः ॥

---

## ॥ ५१८ ॥ कुटः कित् ॥ ४—८५ ॥

कुटरुः पक्षिभेदः ।

कुटेर्ङित्त्वेन सिद्धेऽपि यदयं किद्ग्रहः कृतः ।
तेन कोटरकोटीराद्युणादौ ज्ञापितो गुणः ॥

---

## ॥ ५१९ ॥ शकादिभ्योऽटच् ॥ ४—८६ ॥

अत्र भोजः—"कृसृवृकलिमशकिकङ्किकर्किमक्यविभ्योऽटच्" करटः काकः ॥ सरटः कृकलासः ॥ वरटा हंसी ॥ कलमटः[2] क्षुद्रपत्तनम् ॥ शक्नोत्यनेन गन्तुं शकटः ॥ [कङ्कटः] ॥ कर्कटः ॥ मर्कटः ॥ अवत्यस्मात् पतनभिया इति अवटम् ॥ "कीकटकपटकर्पटादयः" कीकटः मगधदेशः ॥ कम्पतेऽनेन परधीः कपटम् ॥ कर्पटं वस्त्रम् ॥ आद्युक्तेः पर्पटः भक्ष्यभेदः । देवटः शिल्पिभेदः । मर्कटः वानरः इति ॥

---

## ॥ ५२० ॥ अर्तिशॄभ्यामुटच् ॥ ४—८७ ॥

अरटुः शरटुश्च हिंस्रः ॥ अवेश्च भोजः । अवटुः कण्ठस्य पश्चाद्भागः ॥

---

1. G omits जनपदः. GD करूषः नृपः.

2. P and GD कमटः.

॥ ५२१ ॥ कृकलि[1]केटिकडिभ्योऽम्बच् ॥ ४—८८ ॥

संकीर्यते **करम्बः** संमिश्रम् ॥ "कल किल क्षेपे" क्षिप्यते **कलम्बः** शरः ॥ **कटम्बः** वृक्षः ॥ **कडम्बः** धान्यभेदः ॥

---

॥ ५२२ ॥ के[2]देर्णित् पक्षिणि ॥ ४—८९ ॥

कद्यते पीड्यते [3]वर्षेण अवर्षेण[4] च **कादम्बः** हंसः ॥ **कदम्बः** वृक्षः । संघर्षेण पीड्यत इति समूहोऽपि[5] ॥

---

॥ ५२३ ॥ [6]कर्दिकल्योरमः ॥ ४—९० ॥

पादक्षेपे कुत्सितशब्दं करोति **कर्दमः** ॥ क्षिप्यते भूमौ **कलमः** ॥ सर्तेश्च भोजः । सरमा शुनी ॥

---

॥ ५२४ ॥ कुणिपु[7]ल्योः किन्दच् ॥ ४—९१ ॥

**कुणिन्दः** वृषलः ॥ "पुल महत्त्वे" स्थूलो भवति **पुलिन्दः** किरातः ॥ अलिकलिभ्यां च भोजः । भूष्यते पुष्पाद्यैः अलिन्दः ॥ ध्वनन्ति मृगादयोऽत्र कलिन्दः गिरिः ॥

---

॥ ५२५ ॥ कुवश्च ॥ ४—९२ ॥

**कुविन्दः** तन्तुवायः ॥

---

॥ ५२६ ॥ नौ सञ्जेर्घथिन् ॥ ४—९३ ॥

घित्त्वात् "चोः[8] कुः" । **निषङ्गथिः** धनुर्धरः ॥

---

1. A and G -कडिकटि.-
2. GD कदेर्णिद्वा.
3. G अपकर्षेण.
4. G space is left out for writing this word.
5. G समूहश्च.
6. G कलिकर्द्योः. GD कर्दिकलोः.
7. GD -पूलोः.
8. GD "चजोः कुः".

## ॥ ५२७ ॥ उद्यर्तेः चित् ॥ ४—९४ ॥

उदरथिः समुद्रः ॥

---

## ॥ ५२८ ॥ सर्तेर्णित् ॥ ४—९५ ॥

सारयति प्रेरयति अश्वादिकं सारथिः ॥

---

## ॥ ५२९ ॥ खर्जिपिञ्जादिभ्य ऊरोलचौ ॥ ४—९६ ॥

अत्र भोजः । "खर्जिखेलिकृपिवल्लिमयिमण्डिभ्य ऊरः" खर्जूरः तरुः ॥ खल्लरः खुरलीस्थानम्[२] । गौरादित्वात् खल्लरी ॥ कल्पते शक्नोति सुरभीकर्तुं कर्पूरः । बाहुलकात् कृपो रो लाभावः ॥ वैल्लूरं मांसम् ॥ मयते गच्छति वने मयूरः ॥ मण्डूरः कल्कभेदः ॥ "तलिमलिशलिभ्यो णित्" तालूरः जलावर्तः ॥ धार्यते श्रीकामैः मालूरः बिल्वः ॥ गच्छति शालूरः भेकः ॥ "विडूरसिन्दूरपत्तूरधुस्तूरधुत्तूरादयः" । स्यन्दनं कृत्वा निर्मितत्वात् सिन्दूरम् ॥ पत्तूरं गन्धद्रव्यम् ॥ अन्त्यौ उन्मत्तकाख्ये ॥ आद्युक्तेः कस्तूरी । मार्जारः सुवर्णशोधकः ॥ "मसेरूरन्" मसूरः धान्यभेदः ॥ "कृञश्चुट् च" ॥ लघूपधगुणः । कच्चूरः ओषधिः इति ॥ पिञ्जादिस्तु पिञ्जुलः हस्तिबन्धनपाशः ॥ पल्लुलं बदरविकारः ॥ "मव बन्धने" मवूलः हस्ती ॥ कुकूलदुकूलवल्लूललाङ्गूलादयश्च भोजोक्ताः । कौति [७]उष्णाद्रोदित्यनेन कुकूलः तुषाग्निः ॥ "[८]दु गतौ" प्राप्यते धान्यैः दुकूलम् ॥ वैल्लूलः तरुः ॥ लङ्गति चलति लाङ्गूलम् ॥

---

१. G -पटि-
२. G खुरलस्थोनक्.
३. GD adds here the commentary on sūtras 464-502.
४. G मञ्जूरः.
५. GD कर्पूरः.
६. G -बाधः.
७. G कुष्ठात्.
८. G omits दु........धान्यैः.
९. P बल्बूलः.

## ॥ ५३० ॥ शृणातेर्दुक् दीर्घश्च ॥ ४—९७ ॥

ऊलश्च स्यात्। गुणे कृते दीर्घः। हिनस्ति शार्दूलः॥

## ॥ ५३१ ॥ तमेर्बुक् दीर्घश्च ॥ ४—९८ ॥

ताम्यते काङ्क्ष्यते ताम्बूलम्॥

## ॥ ५३२ ॥ कुवश्चट् दीर्घश्च ॥ ४—९९ ॥

कूचः हस्ती। टित्त्वात् कूची प्रमदा॥

## ॥ ५३३ ॥ समीणः ॥ ४—१०० ॥

चट् दीर्घश्च। समीचः चन्द्रः॥

## ॥ ५३४ ॥ सिवेष्टेरू च ॥ ४—१०१ ॥

टित्त्वात् सूची॥ सूचयतेः "अच इः" इति सूचिरपि। "कृञश्च" इति भोजः। कृञः चट् स्यात्, टेरूत्वं च रपरत्वात्। कूर्चम् श्मश्रु। टित्त्वात् कूर्ची[3]॥

## ॥ ५३५ ॥ शमेर्बुन् ॥ ४—१०२ ॥

शमयत्यरीन् शम्बः वज्रः॥ नितमेश्च भोजः। नितरां काम्यते नितम्बः रत्या ग्लायति वा॥

## ॥ ५३६ ॥ उल्बादयश्च ॥ ४—१०३ ॥

अत्र भोजः॥ "अलशलोरत उच्च" उल्बं गर्भवेष्टनम्॥ शुल्वं ताम्रम् रज्जुश्च॥ "अमर्णिद्वा"। गम्यते बालैः अम्बा। आम्बः अपह्नवः॥ "निम्ब-बिम्बडिम्बहिडिम्बसाम्बादयश्च" डिम्बः व्यसनम्। आद्युक्तेः कुशाम्बः नृपः इति॥

---

१. GD adds च.
२. G तृकश्च.
३. G कूर्चिः.

|| ५३७ || स्थः स्तोऽम्बजबकौ || ४—१०४ ||

स्थाधातोः स्त इत्यादेशः, अम्बच् अम्बकच् इति प्रत्ययौ च स्तः। **स्तम्बः स्तबकः** ||

|| ५३८ || हसृभ्यां क्वनिप् || ४—१०५ ||

हृत्वा मत्स्यहन्ता || सृत्वा भीरुः। स्त्रियां हृत्वरी सृत्वरी[1] ||

|| ५३९ || सृजेरश्च || ४—१०६ ||

स्रज्वा[2] ब्रह्मा पटश्च ||

|| ५४० || शाशपिभ्यां ददनौ || ४—१०७ ||

आतपेन तनूक्रियते **शादः** पङ्कः तृणं च || [**शब्दः**[3] ||]

|| ५४१ || अब्दादयश्च || ४—१०८ ||

आप्नोति भावान् इति **अब्दः** वत्सरः || अत्र भोजः। "**गुवः** कित्" गुदम् || "वृतुसुकुभ्यो नुं च" आवृणोति वृन्दम् || वर्धते तुन्दम् उदरम् || सुन्दः असुरः || कुवन्त्यत्र भृङ्गाः कुन्दः इति ||

|| ५४२ || वलिमलितनिभ्यः कयन्[4] || ४—१०९ ||

वलति संवृणोति प्रकोष्ठं **वलयः** || धारयति चन्दनादीन् **मलयः** || तनोति कुलं **तनयः** ||

|| ५४३ || वृहोः षुग्दुकौ च || ४—११० ||

**वृषयः** श्रेष्ठः || ह्रीयते विषयैः **हृदयम्** || "किसलयगेयगवयमुकय-

---

१. G omits सृत्वरी.
२. GD सृज्वा.
३. G, GD, A and P omit the word within brackets.
४. GD omits कयन्.
५. G -गवयगय-

केकयादयः" इति भोजः। कसति उद्गच्छति विकसति वा किसलयम् ॥ गच्छति जानाति धर्मं गयः ऋषिः ॥ गम्यते गया ॥ गवयमुकयौ मृगभेदौ। केकति निवसत्यत्र केकयः जनपदः ॥

---

## ॥ ५४४ ॥ मापोरुरी च ॥ ४—१११ ॥

मापाभ्यां रुरन्त्यस्य ईत्वं च। गुणः। मीयते सूर्येण न मीयते वा **मेरुः**। मान्ति देवा अत्र वा ॥ पाति जले **पेरुः** नौः ॥

---

## ॥ ५४५ ॥ जत्र्वादयश्च ॥ ४—११२ ॥

**जत्रुः** शरीरावयवः ॥ गत्रुः गमनशीलः ॥ शेरुः स्वापशीलः ॥ शिग्रुः ॥ पूरुः ॥

---

## ॥ ५४६ ॥ रुशतिभ्यां क्रुन् ॥ ४—११३ ॥

रौति **रुरुः** ॥ **शत्रुः**। शतिः सौत्रः। शातयतीति शत्रुः इति जत्र्वादितयापि सिद्धिः ॥

---

## ॥ ५४७ ॥ कुसेरूलोम्भोण्डोमेदेताः किच्च ॥ ४—११४ ॥

कुसेः ऊल उम्भ उण्ड उम ईद इत इत्येते कितः स्युः। संश्लिष्यति व्रीह्याद्यत्र **कुसूलम्** ॥ संश्लिष्यति वस्त्रादिभिः **कुसुम्भः** ॥ **कुसुण्डः** ॥ संश्लिष्यति मालादौ **कुसुमम्** ॥ श्लिष्यति मूलधनेन **कुसीदं** वृद्धिः ॥ **कुसितः** ऋषिः ॥

---

## ॥ ५४८ ॥ जनिदाच्युसृवृमदिशमिनमिभृञ्भ्य इत्वन्त्वन्क्न्न्क्रिशक्छक्खठक्टगटचः ॥ ४—११५ ॥

जन्यादिभ्यः क्रमादित्वन्नादयः स्युः। **जनित्वं** लोकः ॥ दधातेस्त्वन्,

**दात्वः** यज्वा ॥ च्युधातोः क्नन्, द्विककारयोगात् कित्त्वम्। **च्युक्नः**[1] क्षीणपुण्यः। च्योक्ना रात्रिः इति क्वचिद्वृत्तौ। चोक्ना वा ॥ सृधातोः क्निः। **सृणिः** इन्द्रः, पूर्वं[2] तु अङ्कुश उक्तः ॥ वृङः शक्। **वृशं** शृङ्गिवेरम्[3] ॥ मादेच्छक्। **मच्छः** मत्स्यः ॥ शमेः खः। शाम्यत्यनेन पापं पावनत्वात् **शङ्खः** ॥ पुनः शमेरेव ठक्। शमेः अनुदात्तोपदेशत्वात् बाहुलकात् किति मलोपः। **शठः** ॥ नमेष्टक्। अनुदात्तोपदेशत्वान्मलोपः। नमति सर्वान् **नटः** ॥ भृञोऽटच्। भ्रियते **भरटः** भृत्यः ॥

---

## ॥ ५४९ ॥ अन्येभ्योऽपि दृश्यन्ते ॥ ४—११६ ॥

इत्वन्नादयोऽन्यधातुभ्योऽपि दृश्यन्ते। पाधातोरित्वम्; "आङ्गुणः" पेत्वः मेषः ॥ णीञस्त्वन्। गुणः। नेत्वः ॥ "प्यायी" प्यात्वम् ब्राह्मणः ॥ गोत्वं यजमानः ॥ शगादिविस्तरस्तु भोजोक्तितो ग्राह्यः। "भृवम्यमिक्रुभ्यः शक्" भृशम् ॥ वंशः ॥ अंशः ॥ क्रुशः ॥ "गुगम्यमितुदिमदिभ्यः छक्" गवन्ते भृङ्गा अत्र गुच्छः ॥ कित्त्वात् "अनुदात्तोपदेश" इति नलोपः। गच्छः गतसंख्या ॥ अच्छः ॥ तुदति व्यथयति पर्याप्तत्वात्[4] तुच्छः ॥ "पूङ्पीङोः ह्रस्वश्च" पुच्छः ॥ पिच्छं बर्हिः ॥ "कच्छगुलुच्छपिलिपिञ्छादयः"। कष्यते जलेन कच्छः ॥ पिलिपिञ्छः राक्षसः ॥ आद्युक्तेः पिञ्छः ॥ "शमिमनिभ्यां खः" मङ्खः मागधः[5] ॥ "निय ऊनक् च"। यण्। नस्यानुस्वारपरसवर्णौ। न्यूङ्खः ॥ "पुंवो नुं ह्रस्वश्च"[6] ॥ पुङ्खः ॥ "अश्नोतेर्डित्"। डित्त्वात् सर्वलोपः। व्याप्तत्वात् खम् ॥ "मयेरूक् च" मयते सर्वत्र प्रसरति मयूखः ॥ "पीङ्कुणिभ्यां ढगुक्तः" पीठम् ॥ कुण्ठः ॥ एते भोजोक्ताः ॥ टकि तु वनतितनत्योः कित्त्वान्नलोपः। प्रार्थ्यते छायार्थिभिः

---

१. G च्यक्नुः.
२. G वालं.
३. G वेतोमः.
४. G अपर्यन्तत्वात्.
५. P adds निगथः.
६. G omits पुंवो........मयूखः.

वटः ॥ विस्तृतत्वात् तटः ॥ भोजस्तु "जुकिजनिपणिभ्यो दीर्घश्च" टच् स्यात् । जूटः मौलिः ॥ कीटः ॥ जाण्टपाण्टौ पक्षिणौ ॥ "घण्टाजटासटादयः" आद्युक्तेः छटा इति । अटज्विस्तरस्तु "शकादिभ्योऽटच्" इत्यत्रोक्तः ॥

---

## ॥ ५५० ॥ मूशक्यबिभ्यः क्लः ॥ ४—११७ ॥

बध्यते भूमौ **मूलम्** ॥ **शक्लः** प्रियंवदः ॥ इदित्त्वान्नलोपाभावः । अम्बते रोदिति क्रौर्यात् **अम्ब्लः** रसभेदः ॥ भोजस्त्वाह "स्याशक्यमिभ्यो लः"। स्यालः[1]। अम्लः इत्येतन्मते ॥ "भिल्लाच्छभल्लसौविदल्लादयः" । भिनत्ति मृगान् भिल्लः शम्बरः[2] ॥ अच्छभल्लः कपिभेदः ॥ सूङो[3] वृद्धिः । सुष्ठु वेत्ति सौविदल्लः कञ्चुकी । आद्युक्तेः भिनत्ति भल्लः इति ॥

---

## ॥ ५५१ ॥ सानसिर्सर्णसि[4]वर्णसि[5]तण्डुलाङ्कुशचषालेल्वल-पल्वल[6]धिष्ण्यशल्याः ॥ ४—११८ ॥

**सानसिः** हिरण्यम् ॥ **सर्णसिः** जलम् ॥ **वर्णसिः**[7] जलरुहः ॥ **तण्डुलः** ॥ अञ्च्यते अनेन गज इति **अङ्कुशः** ॥ **चषालः** यूपाङ्गम् ॥ **इल्वलः** असुरः ॥ पालयति मृगान् **पल्वलम्** ॥ शुल्वलः[8] मुनिः भोजोक्तः ॥ **धिष्ण्यं** स्थानम् ॥ शलति गच्छति देहे **शल्यम्** ॥

---

## ॥ ५५२ ॥ माच्छाससिभ्यो यः ॥ ४—११९ ॥

न मीयते न[9] ज्ञायते **माया** ॥ छिनत्त्यातपं **छाया**, छिनत्त्यन्धकारमिति

---

1. A omits स्यालः.
2. GD शबरः.
3. GD सुङो.
4. A -वर्णसिपर्णसि-
5. GD पर्णसि.
6. P omits -पल्वल.
7. GD पर्णसि.
8. P तुल्वलः.
9. G omits न.

शोभापि ॥ "सस स्वप्ने" सेकाभावे स्वप्नमिवालस्यं प्राप्नोतीति[1] सस्यम् ॥ गुणे "वान्तो यि" इत्यव् । "धातोस्तन्निमित्तस्यैव" इत्यपसव्यम् ॥

---

## ॥ ५५३ ॥ जनेर्यक् ॥ ४—१२० ॥

जन् य "ये विभाषा" इत्यात्वं वा । स्वयं पुत्ररूपेण जायते अस्यामिति जाया ॥

---

## ॥ ५५४ ॥ अघ्न्यादयश्च ॥ ४—१२१ ॥

न हन्तव्या इति अघ्न्या गौः ॥ अत्र भोजः । "कलिपलिकनिबन्धिभ्यश्च" यः स्यात् । क्षिपति[4] रोगान् कल्यः ॥ पल्यं कटकुसूलम् , करिणां भोजनं वा ॥ कान्तिमत्वात् कन्या ॥ बध्नाति प्रतिहन्ति फलं वन्ध्यः ॥ "सञ्जेर्धश्च" सजतोऽस्यां रात्र्यहनी सन्ध्या । संपूर्वस्य ध्यायतेः आलोपः इति वृत्तौ । तत्र "हलो यमाम्" इति यलोपः । सम्यक् ध्यायन्त्यस्यामिति सन्ध्या ॥ "जनिपुणिकृतिभ्यः क्यप्[5] "॥ जन्यं युद्धम् ॥ "पुण कर्मणि शुभे" पुण्यम् ॥ कृन्तति[6] कृत्या पिशाचः ॥ "मध्यविन्ध्यान्यहर्म्यवस्त्यागस्त्यपुलस्त्यापत्यसत्यकुड्यकुल्याहल्यादयः ।" विदधाति करोति भयं विन्ध्यः ॥ हरति चित्तं हर्म्यम् ॥ "वसेरादिवत्वं तुट् च" इति नाथः । वस्त्यं गृहम् । बस्त्यमिति स्वाम्याद्याः ॥ न पतन्त्यनेन अपत्यम् ॥ कोलति संस्त्यायति जलं मृत्तिका चात्र कुल्या ॥ कुड्यम् ॥ आद्युक्तेः सह्यः अद्रिः । मर्त्यः इति ॥

---

१. G omits इति.
२. A, G and P omit G "वान्तो यि" इति.
३. GD omits this sūtra.
४. P adds जहाति.
५. G क्यच्.
६. A कृन्तन्ति.
७. G वन्ध्व.
८. G वन्ध्य-
P and GD पस्य-

## ॥ ५५६ ॥ स्नामदिपद्यर्तिशकिभ्यो वनिप् ॥ ४—१२३ ॥

इपावितौ । स्नावा स्नायुः ॥ मद्वा तृप्तः ॥ पद्वा पादः ॥ गच्छति अर्वा अश्वः ॥ पूर्यते सिराभिः पर्व ॥ शक्वा तक्षकः ॥ स्त्रियाम् "वनो र च" इति ङीब्रौ । शक्वरी च्छन्दः ॥

---

## ॥ ५५७ ॥ शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥ ४—१२४ ॥

शीवा अजगरः । बाहुलकात् ह्रस्वेन शिवा क्रोष्टेति क्वचिद्वृत्तौ ॥ क्रुश्वा क्रोष्टा ॥ रुह्वा वृक्षः ॥ जित्वा शत्रुः ॥ क्षित्वा मृत्युः ॥ सृत्वा[1] कालः ॥ धृत्वा विष्णुः ॥ हृवृभ्यां च भोजः । हृत्वा रुद्रः ॥ वृत्वा आकाशः ॥ "सृजेः कश्च" इति च । सृक्व ओष्ठप्रान्तः ॥

---

## ॥ ५५८ ॥ ध्याप्योः संप्रसारणं च ॥ ४—१२५ ॥

"हलः" इति दीर्घः । धीवा मनीषी ॥ पीवा स्थूलः ॥

---

## ॥ ५५९ ॥ अतेर्धश्च ॥ ४—१२६ ॥

अतन्त्यत्रेति अध्वा ॥

---

## ॥ ५६० ॥ प्र ईरसद्योस्तुट् च ॥ ४—१२७ ॥

प्रेत्वा सागरः ॥ प्रसत्वा धर्मः ॥

---

## ॥ ५६१ ॥ इन् सर्वधातुभ्यः ॥ ४—१२८ ॥

यतते मुक्त्यै यतिः ॥ यजिः यजमानः ॥ वन्दिः हठहृता स्त्री । पुनर्ङीपि[3] वन्दी ॥ "हल विलेखने" । हलिः महद्धलम् ॥ क्षिपन्त्यन्योऽन्यमत्रेति

---

१. G सृत्वा.

२. G शक्वो.

३. G ङीषि.

कलिः ॥ "किल क्रीडने" केलिः ॥ आञ्रियते कुटिः ॥ त्रुटः ण्यर्थवृत्तेः त्रोटिः चञ्चुः ॥ कोटिः ॥ भूषयति मञ्जरीं अलिः ॥ वटिः गुलिका इत्यादि ॥

॥ ५६२ ॥ **पचिपठिकाशिनन्दिभ्य इन्** ॥ ४—१२९ ॥

सत्सूद्विषादित्वम् । पूर्वस्य प्रपञ्चोऽयम् । **पचिः** अग्निः ॥ **पठिः** विद्वान् ॥ प्रकाशते शिवोऽत्र **काशी** वाराणसी ॥ **नन्दिः** वृषः ॥

॥ ५६३ ॥ **हृपिशिरुहिवृतिविदिकीर्तिभ्यश्च** ॥ ४—१३० ॥

हरति पापं मृगान् वा **हरिः** ॥ **पेशिः** मांसभेदः ॥ **रोहिः**[1] वृक्षभेदः ॥ वृत्यते हस्तेन **वर्तिः** दशा ॥ **वेदिः** ॥ **कीर्तिः** ॥

॥ ५६४ ॥ **इगुपधात् कित्** ॥ ४—१३१ ॥

इन् कित् स्यात् । शुचिः ॥ "ऋष गतौ" जानाति ऋषिः ॥ 'वौ रञ्चेर्नु च" इति भोजः । विरिङ्क्ते सूते लोकान् विरिञ्चिः ब्रह्मा ॥

॥ ५६५ ॥ **भ्रमेः संप्रसारणं च** ॥ ४—१३२ ॥

**भृमिः** चलनम् ॥

॥ ५६६ ॥ **क्रमितमिनमिस्तंभामत इच्च** ॥ ४—१३३ ॥

इन् किच्च स्यात् । क्रामति **क्रिमिः** ॥ ताम्यन्त्यनेनान्ये **तिमिः** ॥ **निमिः** नृपः ॥ कित्त्वान्नलोपः । **स्तिभिः** केतकादिसूचिः ॥

॥ ५६७ ॥ **मनेरुच्च** ॥ ४—१३४ ॥

जानाति **मुनिः** ॥

---

1. G रोही.

॥ ५६८ ॥ वलेर्वल्लि चाहिरण्ये ॥ ४—१३५ ॥

वलेरिन् कित् स्यात्, अहिरण्ये वल्ल्यादेशश्च । वल्लिः लता ॥ वलिः हिरण्यम् ॥ अहिरण्य इत्युपलक्षणम् । तेन दानवादावपि वलिः वल्लिश्च ॥

---

॥ ५६९ ॥ वसिवपियजिराजि[1]भ्रजिध्वजिसदिहनिकमिपाशिवदिवृङ्भ्य इञ् ॥ ४—१३६ ॥

वसन्त्यनेन तक्षका वासिः तक्षणसाधनम् ॥ उप्यते जलमस्मिन् वापिः सरः ॥ यजिः यजमानः ॥ एकरूपत्वात् राजते राजिः ॥ [2]भ्राजिः पद्धतिः ॥ ध्वाजिः पताका ॥ सीदत्यास्तेऽश्वे सादिः अश्वारोहः ॥ ञित्त्वात् तत्त्वघत्वे । घातिः अस्त्रभेदः ॥ कामिः कामुकः[3] ॥ पाशिः झिल्लिका ॥ वादिः वक्ता ॥ व्रियते सर्वैः वारि जलम् ॥ शृवमिफलिसंपतिभ्यश्च भोजः । शृणात्यन्योऽन्यं शारिः द्यूतोपकरणम् ॥ वामिः स्त्री ॥ फालिः दलम् ॥ संपातिः पक्षी ॥

---

॥ ५७० ॥ नहो भ च ॥ ४—१३७ ॥

नह्यन्तेऽत्र सिरामुखानि नाभिः ॥

---

॥ ५७१ ॥ कृषेर्वृद्धिश्छन्दसि ॥ ४—१३८ ॥

कार्षिः शशी समुद्रश्च ॥

---

॥ ५७२ ॥ शृः शकुनौ ॥ ४—१३९ ॥

शारिः शुकी । द्यूते तु शारिर्भोजोक्तः ॥

---

॥ ५७३ ॥ कृञ उदीचाम् ॥ ४—१४० ॥

---

1. G omits-भ्रजिध्वजि-
2. G omits भ्राजिः पद्धतिः.
3. A कामुकिः.

कारिः तक्षादिः । प्राचां मते तु "अच इः" इति वक्ष्यमाण इः । करिः विष्णुः ॥

---

## ॥ ५७४ ॥ जनिघसिभ्यामिण् ॥ ४—१४१ ॥

"जनिवध्योश्च" इति वृद्ध्यभावात् **जनिः** वधूः । इह णित्सुयो-जनसामर्थ्यात् वृद्ध्या जानिः इति केचित् । **घासिः** भक्ष्यम् ॥ अलिशलिपलि-तलिजम्यणिभ्यश्च भोजः । अलति भूषयति आलिः सखी, जलं वारयतीति सेतुश्च, तत्तुल्यत्वात् पङ्क्तिश्च ॥ शल्यते प्राप्यतेऽन्नार्थिभिः शालिः ॥ पैल्यते गम्यते बहुभिः पैलिः समूहः ॥ तलति प्रतितिष्ठति वक्षसि[3] तालिः आभरणम् ॥ जमति भुङ्क्ते भ्रातुः स्वं जामिः स्वसा ॥ अणति ध्वनति निखननकाले आणिः कीलः ॥

---

## ॥ ५७५ ॥ [4]अज्यतिभ्यां च ॥ ४—१४२ ॥

इण् स्यात् । गच्छन्त्यत्र योद्धारः, मिथः [5]क्षिपन्ति वा **आजिः** ॥ **आतिः** पक्षी ॥

---

## ॥ ५७६ ॥ पादे च ॥ ४—१४३ ॥

आभ्यां पादे चोपपदे इण् । "पादस्य पत्" इति पद्भावः । **पदाजिः** **पदातिश्च** तुल्यार्थौ ॥

---

## ॥ ५७७ ॥ अशिपणाय्योरुड्लुकौ ॥ ४—१४४ ॥

आभ्यामिण् । अशेरुडागमः । पणायोरायस्य लुक् च स्यात् । [6]वृद्धिः । समूहिषु व्याप्तत्वात् **राशिः** ॥ व्यवहरन्त्यनेन **पाणिः** ॥

---

1. G वक्ष्यते.
2. G वालिः.
3. G omits वक्षसि.
4. P अज.
5. G क्षिपन्ति वज्रीः.
6. G omits वृद्धिः........इण् स्यात्. in the commentary on 579.

॥ ५७८ ॥ वेञो डित् ॥ ४—१४५ ॥

वेञो गतिवृत्त्या विः पक्षी ॥

---

॥ ५७९ ॥ प्रे हरतेः कूपे ॥ ४—१४६ ॥

डित्, इण् स्यात् । प्रह्रियते जलमस्मात् प्रहिः ॥

---

॥ ५८० ॥ नौ[1] व्यो यलोपः पूर्वपदस्य च दीर्घः ॥ ४—१४७ ॥

डित्, इण् च स्यात् । नितरां वीयते बध्यते नीविः । संव्रियेत[2] इति निधिश्च ॥

---

॥ ५८१ ॥ समाने ख्यः स चोदात्तः ॥ ४—१४८ ॥

समान उपपदे ख्याधातोः डित् इण् यलोपश्च स्यात् । पूर्वपदस्य चोदात्तः सादेशः । समानं ख्यानं प्रतिभानमस्मिन् सखा । समानं ख्याति वदति वा ॥

---

॥ ५८२ ॥ आङि श्रिहनिभ्यां ह्रस्वश्च ॥ ४—१४९ ॥

पूर्वपदस्य ङो ह्रस्वः । डित्त्वाट्टिलोपः । अश्रिः ॥ आहन्ति अहिः ॥

---

॥ ५८३ ॥ अच इः ॥ ४—१५० ॥

अजन्तादिः स्यात् । "रु" रूयते स्तूयते रविः ॥ कवयति ग्रथ्नाति कविः ॥ पुनाति युद्धवधात् पविः वज्रम् ॥ तरिः नौः ॥

---

॥ ५८४ ॥ खनिकष्यज्यसिपुसिध्वनिसनिग्रन्थि-
चरिभ्यश्च ॥ ४—१५१ ॥

---

1. G omits नौ व्यो........नीविः　　2. G संप्रीयते

**खनिः** आकरः ॥ **कषिः** खनित्रम् ॥ **अग्निः** आगन्तुः ॥ अस्यत इति **असिः** ॥ **वसिः** वसिता ॥ **ध्वनिः** ॥ **सनिः** याच्ञा ॥ **ग्रन्थिः** ॥ **चैरिः** दवाग्निः ॥ मणेश्च भोजः । शब्दयते स्तूयते जनैः इति मणिः । मणतीति घण्टापि ॥ रविकविपविखनिध्वनिग्रन्थिमणय इण्प्रत्ययान्ता इत्येके ॥

---

## ॥ ५८५ ॥ उभे द्विः ॥ ४—१५२ ॥

उभेरिप्रत्ययो द्व्यादेशश्च । इकार इत्यर्थः । द्विशब्दः । "उभे च द्वित्रौ" इति भोजः । तेन त्रिशब्दः ॥

---

## ॥ ५८६ ॥ वृतेरछन्दसि ॥ ४—१५३ ॥

**वर्तिः** इत्यन्तोदात्तम् । गृहनाम ॥

---

## ॥ ५८७ ॥ भुजेः कित् ॥ ४—१५४ ॥

**भुजिः** भोक्ता ॥

---

## ॥ ५८८ ॥ कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च ॥ ४—१५५ ॥

"ॠत इत्" विक्षिपति भुवनं **किरिः** सूकरः ॥ गिरत्यावृणोति गमनं **गिरिः** ॥ **शिरिः** हिंस्रः ॥ "उदोष्ठ्यपूर्वस्य" पूर्यते जनैः पाल्यते वा **पुरिः** नगरी ॥ **कुटिः** गृहम् ॥ **भिदिः** वज्रम् ॥ **छिदिः** छेत्ता ॥

---

## ॥ ५८९ ॥ कुण्ठिकम्प्योः नलोपश्च ॥ ४—१५६ ॥

**कुठिः** पर्वतः ॥ कम्पते सर्वत्र चरति **कपिः** ॥ "तरतेः संपत्तुक्चा-

---

1. G परिः दुधिविग्निः.
2. G जनैः स्तूयते.
3. G भुवं. GD omits विक्षिपति भुवनं

भ्यासस्य" इति भोजः। कित्त्वात् "ॠत इत्" तिर ई। तॄशब्दस्य द्वित्वमुरदत्वं च। संपदित्वं कि तॄन् इ तुक्। तरति लङ्घयति तरून् तित्तिरिः पक्षी॥

---

## ॥ ५९० ॥ मनिन् ॥ ४—१५७ ॥

सर्वधातोः मनिन् स्यात्। शृणाति दुःखं शर्म॥ आवृणोत्यङ्गं वेर्म॥ वर्ततेऽस्मिन् वर्त्मा[1]॥ श्लिष्यति देहे श्लेष्मा॥ भस्म॥ कर्म॥ जन्म॥ चर्म[2][3]। "कर्मणां चिनुते शुभम्" इति प्रयोगात् कर्मा पुंस्यपि इति टीकासर्वस्वे॥ प्रीणाति प्रेम॥ छादनसाधनं छद्म। छादेर्णिलोपः। "इस्मन्त्र" इति ह्रस्वः॥

---

## ॥ ५९१ ॥ [4]बृंहेर्नोऽच्च ॥ ४—१५८ ॥

अमि यण्। बृंहति व्याप्नोति ब्रह्म।

---

## ॥ ५९२ ॥ उषिकुषिसृपिभ्यः कित् ॥ ४—१५९ ॥

उषति दहति उष्मा॥ कुष्मा जरायुः॥ सृप्मा गन्ता॥

---

## ॥ ५९३ ॥ अशिशकिभ्यां छन्दसि ॥ ४—१६० ॥

व्याप्नोति सुखमिति अश्मा। लोकेऽपि॥ शक्मा शक्तः॥

---

## ॥ ५९४ ॥ भृसृहृधृस्तृसूभ्य[5] ईमनिच् ॥ ४—१६१ ॥

भरीमा स्वामी॥ सरीमा कालः॥ हरीमा वायुः॥ धरीमा रूपम्॥ स्तरीमा स्तरणम्॥ सवीमा प्रसवः॥

---

1. G वर्स्म.
2. P चर्म.
3. P omits चर्म but adds कर्मा.
4. A and P बृंहेरमलोपश्च.
5. P-षूभ्यः ईमनिन्.

॥ ५९५ ॥ जनिहृभ्यामिमनिन् ॥ ४—१६२ ॥

**जनिमा** जन्म ॥ **हरिमा** मृत्युः ॥

॥ ५९६ ॥ वेञः सर्वत्र ॥ ४—१६३ ॥

लोके वेदेऽपि वेञ इमनिन् स्यात्[1] । आत्वम्, गुणः । **वेमा** वानदण्डः ॥

॥ ५९७ ॥ नामन् सोमन् सामन् होमन् हेमन् रोमन् लोमन् व्योमन् विधर्मन् ध्यामन् पाप्मन् ॥ ४—१६४ ॥

एते मनिनन्ताः । नीयते आनीयतेऽनेन **नाम** ॥ **सोमा** ॥ **साम** ॥ **होमा** अग्निः ॥ "हि गतौ वृद्धौ च" । **हेम** ॥ रुहेर्हिलोपः । रोहति **रोम** ॥ लूयते **लोम** ॥ व्ययते संवृणोति लोकं **व्योम**, अवकाशदानात् विशेषेणावति वा ॥ **विधर्मा** वायुः ॥ **ध्याम** प्रहरणम् ॥ **पाप्म** ॥ क्लोमन् ललामन् यक्ष्मन् पक्ष्मन् वर्ष्मन्निति[2] च भोजोक्ताः । **क्लोमा** [3]शरीरान्तरवयवः ॥ ललति विलसति **ललाम** भूषणम् ॥ वर्धते **वर्ष्म** ॥ नाथोक्तास्तु—**तोक्मा** अङ्कुरः । **शुष्मा** अग्निः । **रुक्म** स्वर्णम् ॥

॥ ५९८ ॥ मिथुने मनिन् ॥ ४—१६५ ॥

[4]मैथुने द्योत्ये मनिन् स्यात् । शृधातोः **सुशर्मा** मैथुनेच्छावती स्त्री । स्त्रीपुंसलिङ्गयोः । "सर्वधातोः मनिन् स्यात्" इत्यन्ये । तत्राद्यपक्षे सुशर्ममात्रार्थत्वे सामान्योक्त्यनुपपत्तिः । उत्तरत्र सर्वधातोः मनिनुक्त्यैव सिद्धेः वैयर्थ्यम् । स्वरार्थोऽनुबन्धान्तरपाठस्तु न दृष्टः ॥

---

1. G omits स्यात्.
2. G वर्मन्.
3. G शरीरावयवः.
4. G omits मैथुने……सर्वधातोर्मनिन्.

## ॥ ५९९ ॥ सातिभ्यां मनिन्मनिणौ ॥ ४—१६६ ॥

मनिनो ङित्त्वात् "घुमास्था" इति सोधातोः ईत्वम् । अन्तं करोतीति सीमा ॥ णित्त्वात् वृद्धिः । सातत्येन व्याप्नोति आत्मा ॥

---

## ॥ ६०० ॥ ष्ट्रन् ॥ ४—१६७ ॥

सर्वधातोः ष्ट्रन् स्यात् । पिबत्यनेन पाति संग्राह्यवस्तूनि वा पात्रम् । षित्त्वात् पात्री ॥ छादेः "तितुत्र" इतीडभावः । णिलोपः । "इस्मन्त्रन्" इति ह्रस्वः । छत्रम् ॥ राजेः व्रश्चादिषः । राष्ट्रम् ॥

---

## ॥ ६०१ ॥ भ्रस्जिगमिनमिहनिविष्यशां वृद्धिश्च ॥ ४—१६८ ॥

भ्रस्जेः "स्कोः" इति सलोपः । व्रश्चादिषः । भृज्यतेऽत्र भ्राष्ट्रः अम्बरीषः ॥ गान्त्रं मर्म ॥ नान्त्रं शिरः ॥ हान्त्रं रक्षः ॥ वैष्ट्रः विष्णुः ॥ आष्ट्रं आकाशम् ॥ नशेश्च भोजः । "छशां षः" । बाहुलकात् "मस्जिनशोः" इति नुमभावः । नाष्ट्रः राक्षसः ॥

---

## ॥ ६०२ ॥ दिवे द्यु च ॥ ४—१६९ ॥

वृद्धिश्च स्यात् । द्यौत्रं स्वर्गः ॥

---

## ॥ ६०३ ॥ उषिखनिभ्यां कित् ॥ ४—१७० ॥

ष्टुत्वम् । उष्यते आतपैः उष्ट्रः ॥ "जनसनखनाम्" इति झलि आत्वम् । खात्रम् खनित्रम् ॥

---

## ॥ ६०४ ॥ सिविमुचोष्टेरू च ॥ ४—१७१ ॥

सीव्यत्यनेन सूत्रम् ॥ मुच्यते मूत्रम् ॥

---

१. G omits सा........व्याप्नोति.

२. G ष्ट्रन.

३. G -मुच्योः.

॥ ६०५ ॥ **हुयामाश्रुवसिभसिभ्यस्त्रन्** ॥ ४—१७२ ॥

**होत्रम्** आहुतिः ॥ षित्त्वाभावात् टाप् ॥ **यात्रा** ॥ **मात्रा** ॥ **श्रोत्रम्** ॥ **वस्त्रम्** ॥ **भस्त्रम्** ॥ लुपेश्च भोजः । लोप्त्रं मुषितद्रव्यम् ॥

---

॥ ६०६ ॥ **गमेरा च** ॥ ४—१७३ ॥

अन्त्यस्यात्वम् । गच्छति **गात्रम्** ॥

---

॥ ६०७ ॥ **अमिचिमिदिशंसिभ्यः कित्** ॥ ४—१७४ ॥

कित्त्वात् "अनुनासिकस्य क्विझलोः" इति दीर्घः । व्याप्नोत्युदरं **आन्त्रम्** । किचिद्वृत्तौ अन्त्रमित्यदीर्घमुक्तम् । "कुक्ष्यन्त्रनाड्यः" इति श्रीभागवते मषीकोशेषु पाठश्च ॥ चीयते व्याप्यते भित्त्यादौ **चित्रम्** ॥ मेद्यति स्निह्यति **मित्रम्** ॥ कित्त्वान्नलोपः । **शस्त्रम्** स्तुतिभेदः ॥

---

॥ ६०८ ॥ **पुवो ह्रस्वश्च** ॥ ४—१७५ ॥

पुनाति ऋणापाकरणात् **पुत्रः** ॥

---

॥ ६०९ ॥ **स्त्री** ॥ ४—१७६ ॥

एष स्त्यायतेः ड्रट्प्रत्ययान्तो निपात्यते । डित्त्वाट्टिलोपः । "लोपो व्योः" इति यलोपः । **स्त्री** । टित्त्वात् ङीप् । "स्त्री । संस्त्याने स्त्यायतेः ड्रट्" इति भाष्यपाठः । संस्त्यान इति गर्भस्यास्यां संघातीभावे गम्यमान इत्यर्थः ॥

---

॥ ६१० ॥ **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** ॥ ४—१७७ ॥

नायं नित् । "गुङ् शब्दे" आख्यायते **गोत्रम्** ॥ **धर्त्रं** गृहम् ॥ वियति गच्छन्त्यनेन प्रेरिताः **वेत्रम्** ॥ **पक्त्रः** गार्हपत्याग्निः ॥ वक्त्यनेन

वक्त्रम् ॥ यम्यते बध्यतेऽनेन यन्त्रम् ॥ सीदन्त्युपविशन्त्यत्रे जनाः सत्रम् ॥ क्षदिः सौत्रः । क्षत्त्रम् ॥ वृमनितनिक्षिभ्यश्च भोजः । वृत्तं चर्म ॥ ध्यायते मन्त्रम् ॥ विस्तीर्यते तन्त्रम्[१] ॥ निवसन्त्यत क्षेत्रम् ॥

॥ ६११ ॥ दादिभ्यः छन्दसि ॥ ४—१७८ ॥

दात्रम् ॥ योत्रम् ॥ पोत्रम् ॥

॥ ६१२ ॥ भूवदिगृभ्यो णित्रन् ॥ ४—१७९ ॥

भावित्रम् त्रैलोक्यम् ॥ वदति ध्वनति वादित्रम् ॥ गारित्रः आचार्यः ॥

॥ ६१३ ॥ चरेर्वृत्ते ह्रस्वश्च वा ॥ ४—१८० ॥

चरित्रम् ॥ चारित्रम् ॥

॥ ६१४ ॥ अशित्रादिभ्य इत्रोत्रौ ॥ ४—१८१ ॥

अश्यादिभ्य इत्रः, तृप्रभृतिभ्यः उत्रश्च स्यात् । अशित्रम् अन्नपानम्[३] ॥ कटित्रं श्रोणिः ॥ बन्धित्रः कामः[४] ॥ भ्रियते भरित्रम् शूल्यमांसम् ॥ वहित्रं वाहनम् ॥ उत्त्रः । तरुत्रः ॥ करुत्रम् अभिप्रेतम् ॥

॥ ६१५ ॥ अमेर्द्विषति चित् ॥ ४—१८२ ॥

इत्रः स्यात् । रुजति अमित्रः ॥

॥ ६१६ ॥ आः समिण् निकषिभ्याम् ॥ ४—१८३ ॥

आप्रत्ययोऽत्र संपूर्वस्येणस्यान्निकषेस्तथा ।
समया निकषा चेति समीपार्थेऽव्ययद्वयम् ॥

---

१. G omits अत्र.
२. G तन्त्रः.
३. G अनुपानम्.
४. G कायः.

आप्रत्ययोऽन्यतोऽपीष्टो मृषिसन्योः मृषा सना ।
मुधा स्वधा मुचिस्वद्योः कार्यं बाहुलतोऽखिलम् ॥

---

॥ ६१७ ॥ सूचेः स्मन् ॥ ४— १८४ ॥

झलि "चोः कुः" षत्वम् । सूच्यते सूक्ष्मम् ॥

---

॥ ६१८ ॥ पातेर्डुंसुन् ॥ ४—१८५ ॥

उकार उदित्त्वार्थः । डित्त्वाट्टिलोपः । पुंस्शब्दः । डुंसिजिति केचित् ॥

---

॥ ६१९ ॥ [1]रुचिभुजिभ्यां किष्यन् ॥ ४—१८६ ॥

रुचिष्यम् इष्टम् ॥ [2]भुङ्क्ते वेतनं भुजिष्यः दासः ॥

---

॥ ६२० ॥ वञ्चेरुष्यन् ॥ ४—१८७ ॥

वञ्चुष्यः नकुलः । "पचेरुष्यन्" इति क्वचित् पाठः ॥

---

॥ ६२१ ॥ वसेस्तिः ॥ ४—१८८ ॥

[3]वसत्यत्र मूत्रं वस्तिः ॥

---

॥ ६२२ ॥ वौ तसेः ॥ ४—१८९ ॥

"तितुत्र" इतीडभावः । वितस्तिः द्वादशाङ्गुलः । सपिपदिभ्यां च भोजः । वसति समवैति रथेन सप्तिः अश्वः ॥ पत्तिः ॥

---

॥ ६२३ ॥ प्रथेर्नित् ॥ ४—१९० ॥

प्रथेस्तिन् नित्स्यात् । [4]चैर्त्वम् । प्रस्तिः ख्यातिः ॥

---

1. G रुजि-
2. G and A omit भु......तनं.
3. G वसन्त्यत्र.
4. G omits चर्त्वम्.

